THE

PRINCESS OF WALES

SARASWATI BHAWAN TEXTS.

No 63



EDITED BY

MAHAMAHOPADHYAYA

GOPINATH KAVIRAJ, M. A.

# The Bhaktyadhikaranamala

PART 1.

PRINTED BY MR. H. P. DUTT
AT THE EUREKA PRINTING WORKS,
BENARES CITY.

1936

# भक्त्यधिकरणमाला

श्रीमन्नारायणतीर्थस्वामिकृता
श्रीमन्महर्षिशाण्डिल्यरचितसूत्रीया ।

काशिकराजकीयपाठशालायां पुराणेतिहासभक्तिशास्त्राध्यापकेन
फडके-इत्युपाख्येनानन्तशास्त्रिणा स्वरचितया संदिग्धार्थ-
प्रकाशिनीसंज्ञकटिप्पण्या संयोज्य संपादितः ।

———:o:———



# The Bhaktyadhikaranamala

OF

SRIMANNARAYANA TIRTHA

EDITED WITH

The Sandigdhartha Prakasini Commentary,

BY

ANANTA SHASTRI PHADKE,
PROFESSOR OF PURANA AND ITIHASA,
GOVERNMENT SANSKRIT COLLEGE,
BENARES.

श्री१०८ भैरवायनमः ।

# प्रास्ताविकं किञ्चित् ।

—⊛——

अथोपक्रम्यते श्रीमन्नारायणतीर्थयतिविरचिता श्रीमन्महर्षि-शाण्डिल्यरचितभक्तिसूत्रीया भक्त्यधिकरणमाला प्रकाशयितुम् । इयं श्रीभारतीतीर्थश्रीविद्यारण्यविरचितं वैयासिकन्यायमालाजैमिनीयन्यायमाले सर्वात्मनानुकरोति । प्रकृतग्रन्थकर्त्रा रचितायां महत्यां भक्तिचन्द्रिकाख्यायां श्रीशाण्डिल्यरचितभक्तिसूत्रटीकायां येऽर्था अनिरूपितास्ते सर्वेऽपि प्रायोऽत्र निरूपिताः अतो महत्यापि तया टीकया नास्या गतार्थत्वं सम्भवति । अस्यां भक्त्यधिकरणमालायां ग्रन्थकारस्य विलक्षणं सर्वातिशायि च पाण्डित्यं दरीदृश्यते । अनेनैव न्यायवेदान्तादिसर्वशास्त्राभिज्ञेन ग्रन्थकारेण स्वरचितभक्तिग्रन्थैर्भक्तिशास्त्रस्यापि वेदान्ताद्यन्यशास्त्रसदृशं महत्त्वं वस्तुतः स्थितं प्रकटितम् । अस्याद्य यावद् विभिन्नशास्त्रेषु विद्वत्तापरिपूर्णाः केचन ग्रन्था उपलब्धाः । तेषामापाततोऽप्यालोकनेऽस्य महात्मनः सर्वङ्कषवैदुष्यं परिचीयते । अस्तु । अस्य ग्रन्थस्यायं प्रथमो भागः । द्वितीयभागे ग्रन्थविषयकं ग्रन्थकारविषयकं च वक्तव्यं तथा विषयसूच्यादिकं सर्वमपि विस्तरशः प्रकाशयिष्यत इति निवेदयते—

| गवर्नमेण्टसंस्कृतकालेज-- <br> वैक्रमे १९९३ चैत्रशुक्लनवम्याम <br> काशी । | विद्वद्वशंवदः— <br> **अनन्तशास्त्री फडके** <br> व्याकरणाचार्यो मीमांसातीर्थश्च । |
|---|---|

श्रीगणेशाय नमः ।

श्रीमन्नारायणतीर्थस्वामिकृता--

श्रीमन्महर्षिशाण्डिल्यरचितसूत्रीया--

# भक्त्यधिकरणमाला ।

---:o:---

सूत्रन्यायग्रथितां भक्त्यधिकरणाख्यमुक्तानाम् ।

श्रीरामगोविन्दसुतीर्थपादकृपाविशेषादुपलभ्य बोधम् ।
श्रीवासुदेवादधिगत्य सर्वशास्त्राणि वक्तुं किमपि स्पृहा नः ॥१॥

भक्तिविचारं करिष्यन् ग्रंथारम्भं प्रतिजानीते-*सूत्रेति* । शाण्डिल्यसूत्रोक्ता ये न्याया-युक्तयस्तैर्ग्रथितां-रचितां भक्त्यधि-

---

श्री १०८ भैरवायनमः ।

वाराणसीपुरस्थानां पालने लग्नचित्तकम् ।
अभक्तानां भीतिकरं नमामि भैरवं शिवम् ॥१॥
नारायणयतिग्रन्थे संदिग्धार्थप्रकाशिनी ।
टिप्पणी रच्यते बालबोधायानन्तशास्त्रिणा ॥२॥

अथ श्रीमन्महर्षिशाण्डिल्यरचितसूत्रेषु भक्त्यधिकरणमालां विधाय तस्याः टीकां मन्दानुग्रहार्थं स्वयं कुर्वन् "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ॥ इतिश्रुतेः स्वीयगुरुस्मरणकरणद्वारा स्वीयग्रन्थकरणयोग्यतां श्रीनारायणतीर्थो व्यनक्ति-*श्रीरामेति* । एतच्च दीक्षागुरोर्नाम । श्रीवासुदेवेत्याकारकं तु विद्यागुरोः । भजनं भक्तिरिति भावव्युत्पत्त्या

सद्गतिभूषां मालां कुरुते नारायणाख्ययतिः ॥१॥

शास्त्रं भक्तिविचाराख्यमत्राध्यायास्त्रयः स्मृताः ।

प्रेमतत्साधनार्थौ वा वन्ध ईशार्थचिन्तकः (?)॥२॥

करणानां-भक्तितत्साधननिर्णायकानां पञ्चावयववाक्यसमुदायरूपाणां सुमुक्तानां भगवत्प्रसादत आनन्ददानां मालां-अनुक्रमेण प्रथनरूपाम् । *सद्गतिभूषां* । शोभाभूषितप्रसिद्धमुक्तामालावत्सत्प्रभुसत्तद्भक्तरतिभूषाम् । नारायणाख्ययतिः-*कुरुते* । रचयतीत्यर्थः । तत्रैकैकमधिकरणं पञ्चावयवं-विषयः, संदेहः, संगतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवास्ते प्रत्यधिकरणं स्वयमेव स्फुटीभविष्यन्ति । तत्र संगतयः स्वयमूह्याः । रचयितव्यशास्त्रं निर्दिशन् तदध्यायभेदानध्यायप्रतिपाद्यं च दर्शयति-*शास्त्रमिति* । प्रथमोऽध्यायः प्रेमभक्तिनिरूपणार्थः, द्वितीयस्तत्साधननिरूपणार्थः,स्तृतीय ईशतत्व-

---

तथा भज्यतेऽनेनेति करणव्युत्पत्त्या मूलस्थं भक्तिपदं साध्यसाधनरूपोभयभक्त्योबोधकमित्याशयेनाह-*भक्तितत्साधनेति* । मूलस्थसद्गतिभूषामितिपदस्थसत्पदेन प्रभुभक्तयोरुभयोरपि ग्रहणमित्यभिप्रायेणाह-*सत्प्रभुसत्तद्भक्तेति* । *पञ्चावयवमिति* । उक्तञ्च "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्"॥ इति । अत्र विशयपदेन संशयो गृह्यते । स्वयमप्याह *विषय इत्यादि* । *सङ्गतय इति* । तत्र सङ्गतयः प्राधान्येन चतस्रः शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिः, अधिकरणसङ्गतिश्चेति । तत्र शास्त्राध्यायपादार्थसम्बन्धितयाधिकरणे योजिते सति तस्याधिकरणस्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्च स्वयमूहितुं शक्याः । तथावान्तरसङ्गतयोऽधिकरणसङ्गत्यन्तर्भूता एव । ताश्चानेकरूपाः, आक्षेपसङ्गतिः दृष्टान्तसङ्गतिः-प्रत्युदाहरणसङ्गतिः- प्रासङ्गिकसङ्गतिः- उपोद्घातसङ्गतिः- अपवादसङ्गतिभेदेन । पूर्वाधिकरणस्य सिद्धान्तयुक्तिं तथा पूर्वपक्षोक्तयुक्तिं वीक्ष्य परेऽधिकरणे आक्षेपादिसङ्गतीनां स्वयमेव योजनं कर्तुं शक्यमित्यभिप्रायेणाह *स्वयमूह्या इति*।

## अथातो भक्तिजिज्ञासा । १।१।१

प्रथमे रागरूपत्वं तत्रे मुख्यत्वमागमात् ।
द्वितीये ज्ञानभक्त्यादिभेदचिन्ता च तत्फलम् ॥३॥
तृतीये जगतस्सृष्टिरनिर्वाच्येशशक्तितः ।
जीवन्मुक्तिस्तु भक्तानामभक्तानां च संसृतिः ।
प्रमाणत्रयतो ज्ञेयमिति शास्त्रार्थसंग्रहः ॥४॥
अविचार्या विचार्या वा भक्तिर्नार्हा विचारणे ।
असंदिग्धफलाज्ञानक्रियान्यतररूपतः ॥५॥
ज्ञानक्रियान्यतरतत्स्वरूपत्वक्षतेरियम् ।
विचार्या संशयाक्रान्ता ब्रह्मावाप्तिफलान्वयात् ॥६॥

निरूपणार्थ इत्यर्थः । तत्राध्यायगतपादार्थान् विभजते-*प्रथम इति*। प्रथमाध्यायस्य प्रथमाह्निके भक्ते रागरूपत्वं, द्वितीये रागरूपत्वेऽपि मुख्यत्वं, द्वितीयाध्यायस्य प्रथमाह्निके भक्तिसाधनतयोपादेयज्ञान-चिन्ता, द्वितीयाह्निके साधनभक्तिभेदचिन्ता तत्फलं चेत्यर्थः । *तृतीये त्विति* । तृतीयाध्यायस्य प्रथमाह्निके परमेश्वरस्यानिर्वाच्य-मायाशक्तितो जगत्सर्जनम् । तृतीयद्वितीये भक्तानां जीवन्मुक्तिर-भक्तानां संसारः प्रमाणत्रयाभ्युपगमश्चेति शास्त्रार्थसंग्रहः (१-४) ।

तत्र प्रथमस्य प्रथमे प्रथमाधिकरणमारचयति-*अविचार्येति* । भक्तिविचारात्मकशास्त्रमारभ्यमनारभ्यं वेति संदेहेऽनारभ्यमिति प्राप्तं, विषयप्रयोजनयोरभावात् । संदिग्धं हि विचारस्य विषयो

*संदिग्धं हि विचारस्य विषयो भवतीति* । अत्र सप्रयोजनमित्यपि मन्तव्यम् । संदिग्धकाकदन्तगणनायां प्रतिपत्तुरप्रवृत्तेः । स्वयमपि सूचयति

भवति, भक्तिस्त्वसंदिग्धा। तथाहि। सा किं ज्ञानात्मना संदिग्धा स्यात् क्रियात्मना वा। नाद्यः, वेदान्तैर्ज्ञानस्य निर्द्धारितत्वात्। न द्वितीयः, कर्मकाण्डेन तस्या अपि निर्द्धारणात्। नापि प्रयोजनं पश्यामः। ज्ञानत एव मुक्तेः संभवात्। धर्मार्थकामानां क्रियात एव संभवादिति प्राप्ते-उच्यते। शास्त्रमारम्भणीयं विषयप्रयोजनसद्भावात्। ज्ञानक्रियोभयभिन्नाया ज्ञानक्रियात्मत्वविप्रतिपत्त्य संदिग्धत्वसंभवात्। तथाहि। केचिदाराध्यत्वेन ज्ञानं भक्तिमुपदिशन्ति। केचित्स्ववर्णाश्रमाचारपरिपालनमुपदिशन्ति। केचिद्रागात्मिकामुपदिशन्ति। अतः संदिग्धा भक्तिर्विषयः। एवं त (त्वज्ञानात्त) दनुष्ठानाद्ब्रह्मावाप्तिरूपमुक्तिलक्षणं प्रयोजनमपि "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" (क० २-२३)इत्यादिश्रुत्या "मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते" (श्रीभ० गी० अ० १४ श्लो० ६) इत्यादिस्मृत्या च प्रसिद्धम्। तस्माद्भक्तेर्विचारार्हत्वाच्छास्त्रमारम्भणीयमिति-सिद्धान्तः (५-६)।

---

*नापि प्रयोजनमित्यादिना*। लोकैर्धर्मादिपुरुषार्थचतुष्टयेऽन्यतमं प्रार्थ्यते। तथा तत्प्रापकं कारणं ज्ञानरूपं क्रियारूपं वापेक्ष्यते तच्चान्यतः सिद्धमित्याह—*वेदान्तैरित्यादि*। *आराध्यत्वेनेति*। नैयायिकाः। *केचित्स्ववर्णेति*। मीमांसकाः। *केचिद्रागात्मिकामिति*। भक्तिसूत्रानुयायिनः। *यमेवैषेत्यादि*। अत्र प्रथमस्य'वृणुते' पदस्य भजत इत्यर्थः। द्वितीयस्य'वृणुते' पदस्य प्रकाशयतीत्यर्थः। त्रिगुणाधीनत्वं संसारः, त्रिगुणातिक्रमणं ब्रह्मभूयकारणम्। तत्र त्रिगुणातिक्रमणे च भक्तिरेव प्रधानं कारणमित्याशयवान् भगवद्गीतास्थं वचनमुदाहरति-*मां चेति* अस्य वचनस्योपक्रमे गीतायां-'तत्र सत्त्वं निर्मलत्वात्प्रकाशकम्' 'रजो रागात्मकं विद्धि' 'तमस्त्वज्ञानजं विद्धि' इत्यादिना गुणत्रयकार्यं संसाररूपमुक्तमिति बोध्यम्।

## सा परानुरक्तिरीश्वरे । १।१।२

अस्ति लक्ष्म न चाभक्ते रागस्यातिप्रसङ्गतः ।
क्लेशत्वाद्धेयतोऽभावाद्विजातीयस्य लक्ष्म नो ॥७॥
राग आराध्यनिष्ठो स्याल्लक्ष्म हेयो न चाप्ययम् ।

द्वितीयधिकरणमारचयति *अस्तीति* । "माहात्म्यबुद्धिपूर्वस्तु स्नेहो भक्तिरितीर्यते" इत्यादौ श्रूयमाणं भक्तिलक्षणं न घटते घटते वेति संदेहे (न घटत इतिपूर्वपक्षस्तथा) हि । किं चेतनगोचरानु-

---

सूत्रार्थस्तु–'अथ' शब्दः श्रवणमात्रेण मङ्गलप्रयोजनः । अर्थश्च तस्याधिकार एव नानन्तर्यम् । आनन्तर्यं च द्विविधं संभवेत्, स्वाध्यायाध्ययनानन्तर्यं शमदमादिसम्पत्त्यानन्तर्यं वा-परन्त्वत्र 'क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्वचैष परमात्मनि रूढभावाः' 'ताः श्रद्धया मेऽनुपदं शृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रतिः' 'नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् । तेषु तेष्वचला भक्तिरच्युतास्तु सदा त्वयि' ॥ इत्यादिश्रीमद्भागवतविष्णुपुराणस्थवचननिचयावलोकनेनानिन्द्ययोनेरपि मुमुक्षुमात्रस्य भक्त्यधिकारस्य निर्णयेनोभयविधमपि संभवति । 'अतः' शब्दो हेत्वर्थः । स च यदर्थसाकाङ्क्षः । तथा च यतः कर्मणः 'कष्टं कर्म' इतिन्यायेन दुःखग्रस्तत्वात्तत्फलं च "एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्यानित्यत्वावधारणात्, ब्रह्मविद्याफलस्य मोक्षस्याविद्यानिवृत्तिरूपस्य दुःखध्वंसरूपस्य चात्मनो भेदे सत्यत्वेन स्वीक्रियमाणे द्वैतप्रसङ्गः, मिथ्यात्वेन स्वीक्रियमाणे प्रतियोगिनो दुःखस्याविद्यायाश्चोन्मज्जनप्रसङ्गः । एवञ्च तस्य दुर्निरूप्यत्वम् । अतः सुनिरूप्यफलाया अक्षयफलायाश्च भक्तेर्विचारः कर्तव्यः । जिज्ञासाशब्दस्य विचारे लक्षणा । एवञ्च सुनिरूप्याक्षयफलाया भक्तेर्विचारोऽधिक्रियत इत्यर्थः ।

*माहात्म्यबुद्धिपूर्वस्त्विति* । अत्र पूर्वशब्दः कारणत्वसूचकः, तच्च कारणं

संसारानुबन्धित्वादनुरज्यामिधीम(र्य)तः ॥८॥

रागत्वमात्रं लक्षणं, उत स्वोत्कृष्टविषयकानुरागत्वं, विलक्षणरागत्वं वा। नाद्यः। तस्य पुत्रादिगोचरवात्सल्यादिरूप-(त्वेन) विनापि लक्षणं प्राप्तेः। न द्वितीयः। पुत्रादेरपि केनचिद्रूपेण स्वोत्कृष्टत्वस्य संभवादतिव्याप्तितादवस्थ्यात्। अनुत्कृष्टेऽप्युत्कृष्टत्वभ्रमेण जाताया अनुरक्तेरपि भक्ति (स्वरूपत्वस्वीकारस्येष्टत्वे-) न तत्राव्याप्तेश्च। न च स्वोत्कर्षज्ञानसमयानुरागत्वं विवक्षणीयम्। [ननु] स्वोत्कर्षज्ञानप्रयोमुक्तिहेतोर्निर्विशेषब्रह्मभक्तेस्तथात्वाभावात्। मुक्तिहेतोर्निर्विशेषब्रह्मभक्तेस्तथात्वाभावात्। [ननु] स्वोत्कर्षज्ञानप्रयो-ज्यरागत्वं त्रित्र (तृतीयं,निर्वि) शेषभक्तावपि पूर्वभाविन उत्कर्षज्ञान-स्य प्रयोजकत्वमस्त्येव. अत एव प्रयोज्यत्वार्थकं'अनु'पदमपि सफल-मितिचेन्न। स्वोत्कर्षबुद्ध्यापि पुत्रादौ वात्स (ल्योत्क) र्षदर्शनेन तत्रा-तिव्याप्तितादवस्थ्यात्। उत्कर्षाननुगमेन लक्षणाननुगमप्रसङ्गात्,

जनकस्वरूपम्, माहात्म्यञ्च वैजात्यविशिष्टं विवक्षितम्। एवञ्च विजातीयमाहात्म्य. बुद्धिजन्यत्वे सति स्नेहत्वं लक्षणं फलितम्। तथा च माहात्म्यबुद्धिजन्यादरे, माहात्म्यबुद्धिरहिततात्कालिकस्नेहे च विशेषणविशेष्ययोर्निवेशेन नातिव्याप्तिः। वैजात्यनिवेशेन च माहात्म्यबुद्धिजन्यपुत्रविषयकस्नेहे नातिव्याप्तिः। मूलस्थो यथाश्रुतलक्षणं स्वीकृत्याग्रिमो लक्षणं घटते नवेति विचार इति बोध्यम्।

*स्वोत्कृष्टेति*। वास्तविकोत्कृष्टे मदपेक्षयाऽयमुत्कृष्ट इत्याकारकज्ञानीय-विशेष्यतारूपविषयताश्रयविषयकानुरागत्वमित्यर्थः। *केनचिद्रूपेणेति*। मद-पेक्षयायं मदीयः पुत्रो विशिष्टभाग्यद्रव्यादिवत्तयोत्कृष्ट इत्यादिरूपेणेत्यर्थः। सम्पूर्णरूपेणोत्कृष्टत्वापेक्षणे तु पुत्रादिष्वतिव्याप्तेरभाव इत्यभिप्रायेणाव्याप्तिं प्रदर्शयति-*अनुत्कृष्टेऽपीति*। तत्र वास्तविकोत्कर्षाभावात्। *स्वोत्कर्ष-ज्ञानेति*। अत्र वास्तविकोत्कृष्टत्वं नापेक्षणीयमिति भावः। *तथात्वाभावादिति*। स्वोत्कर्षज्ञानादिलक्षणाभावादित्यर्थः। *पूर्वभाविन उत्कर्षस्येति*। "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दं ब्रह्म" इत्यादिश्रुतिभिः स्वोत्कृष्टादिज्ञानं पूर्वं जायते पश्चाच्च मुक्तिकारणं निर्विशेषब्रह्मभक्तिरेवातः प्रथमजातोत्कर्षज्ञानप्रयोज्यत्वं निर्विशेषब्रह्मज्ञान इतिभावः। *अनुपदमिति*। 'सा परानुरक्तिरीश्वरे' इतिसूत्रघटकं, नो चेतद्व्यर्थमिति भावः। *उत्कर्षाननुगमेनेति*। उत्कर्ष-

अविद्याविक्लेशमध्यपरिगणितत्वाच्च । नापि तृतीयः । अप्रसिद्धत्वा-
दिति प्राप्ते, उच्यते । प्रथमद्वितीयपक्षयोरसंभवेऽप्यनुरागविशेषत्वं
लक्षणं भविष्यति । तच्चानुरज्यामीत्यादिप्रत्यक्षसिद्धो रागत्वव्याप्य-
जातिविशेष एव । स च जातिविशेषो व्यवहाराविरोधेनेश्वरविषयके
वात्सल्यादावपि न लोकविषयकः इत्यपि कल्पनीयम् । न
चायं हेयः, भवाजनकत्वात् प्रत्युत सत्संगवद्विरोधित्वात् ।

प्रयोजकपदार्थानामानन्त्येन तत्प्रयोज्योत्कर्षाणामपि बहुत्वेन सकलोत्कर्षबोध-
कैकलक्षणाभाव इत्यर्थः ।

*अप्रसिद्धेति* । रागगतवैलक्षण्यस्येत्यादौ पूरणीयम् । वैलक्षण्यं च
सर्वप्रकारेण साम्याभाववत्त्वम् । सर्वप्रकाराणामप्यनुरागाणां केनचिदंशेन साम्येन
सर्वथा विलक्षणरागस्याप्रसिद्धिरिति भावः । विलक्षणरागत्वमित्याकारकतृतीय-
पक्षस्थविलक्षणपदं विशेषपरमित्यभिप्रेत्य तस्य चानुरज्यामीति लौकिकप्रतीति-
प्रत्यक्षसिद्धत्वमित्यभिप्रायेणाह - *अनुरागविशेषेति* । *व्यवहाराविरोधेनेति* ।
यद्यपि पुत्रादिविषयकवात्सल्यादौ प्रीत्यादिशब्दव्यवहारदर्शनेऽपि भक्तिशब्द-
व्यवहारस्य परमात्मविषयकानुराग एव दर्शनेन तथा कल्पनमिति
भावः । *भवेति* । *वात्सल्यादावपीति* । अपिशब्द एवार्थकः ।
संसारक्लेशजनकानुरागस्यैव भवजनकत्वेनाविद्याक्लेशमध्यपरिगणितत्वमस्य तु
संसाराजनकत्वमिति । *सत्संगेति* । *विरोधित्वेति* । "त एत साधवः
साध्वि सर्वसङ्गविवर्जिताः । सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते" । "प्रसङ्ग-
मजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम्" ॥
इत्यादिश्रीमद्भागवतस्थवचननिचयेन, तथा "केवलेन हि भावेन गोप्यो गावो नगा
मृगाः । येऽन्ये मूढधियो नागाः सिद्धामामीयुरञ्जसा ॥ यं न योगेन साङ्ख्येन
दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपि" ॥ इत्यादि-
वचनैश्च सत्सङ्गो यथा संसारविरोधी तथेश्वरानुरागोऽपि संसारविरोध्येवेतिभावः ।

तत्संस्थस्यामृतत्वोपदेशात् । १।१।३

मुक्तौ हेतुर्नवा भक्तिर्ज्ञानमज्ञाननाशकम् ।
ब्रह्मावाप्तेश्च नित्यत्वान्न भक्तिर्मोक्षसाधनम् ॥९॥

आराध्यनिष्ठत्वकथनं त्वत्र लक्ष्यप्रदर्शनाभिप्रायम् । अत एव सूत्रे 'ईश्वरेऽनुरक्तिः' इति प्रतिबिम्बभूतजीवं प्रतीश्वरस्य बिम्बतया नियन्तृत्वेनाराध्यत्वलाभतो विलक्षणविषयवृत्तिविषयताशालित्वेन रागे वैजात्यलाभाय । प्रकृते तेनेशब्रह्मोभयभक्तिसंग्रहः । वस्तुत ईश्वरकथनं प्रकृते तद्भक्तेः परभक्तित्वलाभायात एव सूत्रे 'परा' इति सफलमित्यास्तां विस्तरः (७-८)।

तृतीयमारचयति-※मुक्ताविति※ ।भक्तिर्मोक्षसाधनं नवेतिसंदेहे न मोक्षहेतुः । शुक्तिरजतादौ साक्षाद्ज्ञानस्यैवाज्ञाननाशकत्व-

※आराध्यनिष्ठत्वकथनमिति※ । कारिकास्थमिति शेषः । सूत्रवत्कारिकायामीश्वरशेपादाने मायाप्रतिबिम्बितचैतन्यस्येश्वरत्वेन ब्रह्मणस्ततो भिन्नत्वेन निर्देशेपतद्भक्तेरसङ्ग्रहापत्तेरिति । ※ईश्वरस्य बिम्बतयेति※ । नन्वीश्वरस्य स्वयं मायाप्रतिबिम्बितत्वेनान्तःकरणावच्छिन्नचैतन्यरूपजीवं प्रति कथं बिम्बरूपत्वं, जीवदृष्ट्या बिम्बभूतं ब्रह्मचैतन्यमेवेतिचेन्न ग्रन्थकारकृतेऽन्तःकरणप्रतिबिम्बित ईश्वर एव जीवः । अत एव "तत्वमसि" इति श्रुत्यास्तत्पदशक्येश्वरेण सह जीवस्यैक्यप्रतिपादनं सङ्गच्छते । युक्तं चैतत् । सृष्टिप्रारम्भकाले ब्रह्मणो मायाप्रतिबिम्बितरूपेश्वरत्वेनेश्वरकृतमायिकान्तःकरणेष्वीश्वरप्रतिबिम्बितत्वस्यैवौचित्यात् । अत एवेश्वरस्य जीवनियन्तृत्वमपि लौकिकप्रतिबिम्बस्य बिम्बाधीनत्ववदुपपद्यत इति। आनन्दादितिरोधानेन निर्गुणब्रह्मभक्तिर्न परा। सूत्रे 'परा' इतिपदोपादानेनाराध्येश्वरस्यैव विवक्षितत्वादित्यभिप्रायेणाह—※वस्तुत इति※ ।

भक्तेर्लक्षणमुक्तमधुना तत्र योजनस्थापनार्थं शङ्कते—※भक्तिरिति※ । ※शुक्तिरिति※ । शुक्तिरजतरज्जुसर्पादिभ्रमेष्वधिष्ठानसाक्षात्कारस्यैव भ्रमनिवर्तकत्वदर्शनेन क्रियास्वरूपभक्तेर्न मोक्ष उपयोग इत्यर्थः । अयमत्राभिप्रायः-

मेवं वाच्यविवेकेन ब्रह्मसंस्थामृतत्ववाक् ।
संस्थाख्यायाः प्राह भक्तेर्मोक्षसाधनतां स्फुटम् ॥१०॥

दर्शनात् । ब्रह्मावाप्तिश्च स्वरूपसंयन्धविशेषात्मिकाया नित्यतया स्वत एव सिद्धत्वादिति प्राप्ते—उच्यते । भक्तिर्मोक्षसाधनं "रक्तं

रक्तः स्फटिकः पीतः शङ्ख इत्यादिभ्रमेषु यद्यपि भ्रमोत्पादकजपाकुसुमादिपदार्थरूपोपाधिसंयोगादेः कारणत्वमस्ति । तस्य निवृत्तिस्त्वन्यतरपदार्थनिष्कासनरूपक्रियया भवति, तथापि तत्रापि भ्रमस्य वस्तुस्वरूपाज्ञानमेव कारणमित्येवैकरूपं शुक्तिरजतादिसाधारण्येन वक्तव्यम्, लाघवात् । यद्यपि रक्तस्फटिकादिभ्रमनिवर्तिका जपाकुसुमादिरूपोपाधिनिष्कासनक्रियापि दृश्यते तथापि तत्र विनोपाधिहानिमपि वस्तुस्वरूपज्ञाने जाते न पूर्ववदासक्तिजनकत्वं पदार्थद्वयसंयोगादेरिति सर्वसंमतम् । एवञ्च प्रकृते सुखदुःखमोहात्मकस्याज्ञानतो जातस्य जगतः कारणं परब्रह्मस्वरूपवस्तुनोऽज्ञानपूर्वकं स्वस्य ततो भेदज्ञानमेव । दुःखाद्यात्मकस्य जगतो निवर्तकं च परब्रह्मणः सम्यग्ज्ञानं स्वस्य ततोऽभेदज्ञानं च । उक्तञ्च श्रुतिस्मृतिभिः "ज्ञानादेव तु कैवल्यम्" "अहं ब्रह्मास्मि" "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्" ॥ इति । एवञ्च सर्वत्र भ्रमनिवर्तकत्वं ज्ञानस्यैव दृष्टं नोपाधिहानस्यातो भक्त्योपाधिहानेन मोक्ष उपयोग इति । *ब्रह्मावाप्तेरिति* । अपि च सिद्धे त्रिगुणात्मकान्तःकरणरूपोपाधिहानेः कथञ्चिद्सुखदुःखाद्यात्मकजगद्भ्रमनिवर्तकत्वेऽपि न भक्तेर्मोक्ष उपयोगः, यतो मोक्षो नाम जीवस्य ब्रह्मस्वरूपेण स्थितिः । सा च वस्तुतो जीवस्य परमात्मनश्च भेदाभावान्नित्यसिद्धैवेति ।

पूर्वोक्तशङ्काया उत्तरमाह—*उच्यत इति* । *भक्तिर्मोक्षसाधनमिति* च । अयमभिप्रायः । संसारस्य परमात्मस्वरूपाज्ञानेन जातत्वेन मिथ्यास्वरूपत्वे प्रमाणाभावः । प्रत्युत तस्य सत्यत्व एव प्रमाणमुपलभ्यते । तथाहि "कुतस्तु खलु सौम्यैवं स्यादसतः सज्जायेत" इत्यादिच्छान्दोग्यश्रुत्या कार्यसत्तया कारणसत्ताबोधिन्या संसारस्य सत्यत्वमेव प्रतिपाद्यते । "सत्यसंकल्पः" इत्यादिना च परमेश्वरसर्गस्य सत्यत्वमेवोच्यते । एवञ्च संसारस्य सत्यत्वमेव भक्तिशास्त्रकारमते । तथा च संसारे भ्रमस्य विद्यमानत्वेऽपि न संसारस्य मिथ्यात्वमतः

ह्येवायं लब्ध्वानन्दी भवति'' (तै० उ० २-७) इतिश्रुतौ रसवत
पदानन्दाविर्भावकथनात्स्थायिभावापादकानुरागस्यैव कैवल्यहेतुत्वं
सर्वत्रभ्रमात्यन्तिकनिवर्तकत्वमुपाधिहानस्यैव । अत एव पीतःशङ्ख इत्यादि
स्थले भ्रमाधिष्ठानज्ञानेऽपि पित्तादिरूपोपाधिनाशादिकमनुष्ठीयते। यद्यपि क्वचिदधि-
ष्ठानज्ञाने जात एव भ्रमनिवृत्तिर्भवति नोपाधिहानेनेति वक्तुं शक्यते,तथापि तत्राप्यधि-
ष्ठानज्ञानस्य व्यापारस्थानीयत्वेन कारणत्वाकल्पनात्। अपि च रक्तः स्फटिकः,पीतः शङ्ख
इत्यादिस्थलेषूपाधिभूत जपाकुसुमादिरूपवस्तुनिष्कासने यथा सम्यक्तया भ्रमस्य
निवृत्तिर्भवति न तथा ज्ञानेन। तेन तात्कालिकभ्रमनिवृत्तेरपि भ्रमोत्पत्तेः कार-
णस्य विद्यमानत्वेन भूयस्तस्य तत्र संभवः। जपाकुसुमादिरूपोधिभूतवस्तुनिष्कासने
कारणनिवृत्त्या भ्रमस्य न कदापि संभव एव। एवं चैतादृशस्थलेषु भ्रमनिवर्तकत्व-
मुपाधिहानस्यैवेति सुस्पष्टम्। फलमुखगौरवस्यादोषत्वेन ज्ञानस्यैवैकरूपस्य भ्रमनि-
वर्तकत्वरूपलाघवं नात्रोपयोगि। तथा च सुखदुःखाद्यात्मकस्य संसारूपस्य जगतः
कारणं न परमात्मस्वरूपाज्ञानं किन्तु तदभक्तिकृतत्रिगुणात्मकान्तःकरणरूपोपा-
धिरेव। अत एव जयविजययोः परमात्मसमीपे सदा वर्तमानत्वेन सर्वदा ज्ञानवतोरपि
परमात्मनो भक्तापराधरूपभक्तिविरोधिकार्यकरणाज्जगति हिरण्याक्षादिरूपेण
प्रादुर्भाव इत्यादि श्रीमद्भागवतप्रतिपाद्यं संगच्छते। अतो भक्तिरेव
सुखदुःखादिप्रदान्तःकरणरूपोपाधिनिवर्तकतया मोक्षे कारणमिति समञ्जसम्।

रसपदवाच्यपरभक्तेरेवानन्दरूपमोक्षकारणत्वं श्रुतिरपि कथयतीत्याह-
*रसं ह्येवायमिति*। अत्र रसो नाम "विभावानुभावव्यभिचारिसंयोगाद्रस-
निष्पत्तिः" इति नाट्यशास्त्रकाराचार्यभरतसूत्रालोचनेन विभावानुभावव्यभि-
चारिसंयोगेनाभिव्यक्तः स्थायिभाव एव भज्यभक्तयोर्भेदतिरोधानेन भक्तगत
एव सन् परमानन्दसाक्षात्काररूपरसरूपेण परिणमत इति। उक्तञ्च-'स्थायि-
भावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते। व्यक्तश्च रसतामेति परानन्दतया
पुनः" ॥ इति। *स्थायिभावश्चेति*। स च 'द्रुते चित्ते विनिक्षिप्तः स्वाकारो
यस्तु वस्तुना। संस्कारवासनाभावभावनाशब्दभागसौ" ॥ इत्युक्तः।
*अनुरागस्येति*। अत्र परमात्मविषयकस्येति पूरणीयम्। तेन स्त्र्यादिविषय-
कानुरागे नातिव्याप्तिः।

वाच्यम् । विवक्षितविवेकेन च मोक्षसाधनत्वमवधार्य "ब्रह्मसंस्थोऽमृतत्वमेति" (छा०उ०) इत्यादिश्रुत्या संस्थाख्याया मोक्षसाधनत्वोपदेशात् । अन्यवृत्तिनिरोधेन तद्वृत्तिरूपायाः संस्थाया निष्ठापरपर्यायाया भक्तावेवान्तर्भावात् । रागावान्तरजातेरेव वृत्यन्तरविरोधित्वस्यान्वयव्यतिरेकाभ्यामवगमात् । युक्तं चैतत् । अन्यथा ब्रह्मादिभक्तानां तारतम्येन फलश्रवणानुपपत्तेः । भक्तिवादे तु

*विवक्षितविवेकेन चेति* । अत्रादौ मोक्षसाधनवस्तुष्वितिपदं विवक्षितपदोत्तरं च वस्तुपदं पूरणीयम् । एवञ्च मोक्षसाधनत्वेन शास्त्रप्रतिपादितपदार्थेषु स्वविवक्षितभक्तिरूपसाधनविचारेण भक्तेर्मोक्षसाधनत्वं निश्चित्येत्यर्थः । *ब्रह्मसंस्थ इति* । ब्रह्मण्येव संस्था वृत्तिर्यस्य स ब्रह्मसंस्थः, अर्थादन्यवृत्तिनिरोधानेन ब्रह्मण्येव सर्वदान्तःकरणवृत्तिको भक्तो मोक्षभाग् भवतीत्यर्थलाभेन भक्तेरप्यन्यवृत्तिनिरोधपूर्वकब्रह्मविषयकत्वं लभ्यत इत्याह—*अन्यवृत्तीति* । *भक्तावन्तर्भावादिति* । गौणमुख्यभेदेन भक्तेरनेकत्वेन सामान्यभक्तिरूपत्वमनुक्त्वा भक्तावन्तर्भावः कथित इति बोध्यम् । ननु संस्थापदस्यानुरागरूपभक्त्यर्थत्वे किं प्रमाणम्, "संस्था तु मर्यादा धारणा स्थितिः" इत्यनेन कोषे मर्यादाद्यर्थकत्वबोधनादित्यत आह—*रागावान्तरेति* । अयमभिप्रायः । ब्रह्मनिष्ठेति सामासिकपदस्यान्यविषयकवृत्तिनिरोधपूर्वकब्रह्मविषयकवृत्त्यर्थकत्वस्यावश्यकत्वेनान्यविषयकान्तःकरणवृत्तिनिरोधकत्वं ब्रह्मविषयकानुरागस्यैवास्ति, यतो लोके मातुर्गृहासक्ताया अपि पुत्ररोदनेनोत्पन्नतद्विषयकानुरागस्यैव गृहसम्बधिकार्यासक्तचित्तस्य विरोधकत्वं दरीदृश्यतेऽतोऽन्वयव्यतिरेकेण रागविशेषसत्वे चितस्य वृत्यन्तरनिरोधो रागविशेषाभावे वृत्यन्तरनिरोधाभाव इत्यादिरूपेण रागावान्तरजातेरेव तत्कल्पनमुचितमिति ।

*अनुपपत्तेरिति* । इदमाकूतम् । स्वस्य ब्रह्मणोऽभेदबोधकज्ञानस्य मोक्षप्रापकत्वे यदा तादृशं ज्ञानं संजायेत तदा मोक्षस्तादृशज्ञानाभावे च मोक्ष-

## ज्ञानमितिचेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः १।१।४

ज्ञानं संस्था नवा संस्था ज्ञानमज्ञाननाशकम् ।

नभिन्नमोक्षभवणाभिन्ना संस्थार्थसाम्यतः ॥११॥

गगतारतम्यात्फलतारतम्यमिति न कश्चिद्विरोधः ( ९-१० ) ।

चतुर्थमारचयति-*ज्ञानमिति*। ज्ञानं संस्था न वेति संदेहे, ज्ञानं संस्था, तस्यैव "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" (श्री०

---

माव इत्येव वक्तुं शक्येत न तु तारतम्येन फलबोधनं ज्ञानस्यैव मोक्षप्रापकत्वपक्षे सामञ्जस्येन कथञ्चित् शक्यम् । ज्ञाने तारतम्याभावात् । भक्तेरेव मोक्षप्रापकत्वे तु यावत्यन्तःकरणवृत्तिः परमात्मविषयिण्यनुरागवती स्यात्तादृशं फलमिति फलतारतम्यं सम्यक्तयोपपद्यत इति ।

द्वितीयसूत्रार्थः भाष्यटीकाकारेणैव विस्तरेण स्पष्टीकृतोऽतस्तत्र नोक्तः परन्त्वत्र प्रसङ्गतो बालबोधार्थं संक्षेपतयोच्यते-'सा'इति पदेन प्रकृतभक्तिरूपं लक्ष्यं निर्दिश्यते 'परा'इतिपदं श्रवणादिगौणभक्तिवारणार्थम् । एवञ्च जिज्ञासासूत्रेऽपि मोक्ष।पकपरभक्तिरेव जिज्ञासाविषयिणीति मन्तव्यम् । 'ईश्वर'पदमाराध्याभिप्रायम् । तथानुरक्तिपदं च लक्षणनिर्देशपरम् । एवञ्चाराध्यविषयकमनुरक्तित्वमेव परभक्तेर्लक्षणं सिद्धम् । प्रकृतसूत्रस्यार्थस्तु तस्मिन्-परमात्मनि, निष्ठा-अन्यवृत्तिनिरोधेन तद्वृत्तिरूपा चित्तस्यावस्था विशेषो यस्य तथोक्तस्तस्यामृतत्वस्य-मोक्षस्य, उपदेशात्-श्रुत्या प्रतिपादनात् । "ब्रह्मसंस्थोऽमृतत्वमेति" इतिश्रुतेरिति ।

संस्थापदस्य मर्यादाद्यनेकार्थत्वेन प्रकृते संस्थापदेन भक्तिरेव स्वीकरणीया न तु ज्ञानादिकमितिबोधयितुं चतुर्थाधिकरणस्य योजनेत्यभिप्रायेणाह *ज्ञानमितीति*। संस्थाशब्दस्य यद्यपि कोषादिषु ज्ञानार्थकत्वे विशेषरूपेणाकथनेऽपि मोक्षप्राप्तिरूपफलस्याज्ञाननाशपूर्वकज्ञानरूपोपायसाध्यत्वेनाज्ञाननाशकस्य ज्ञानस्यैव स्मृतावुपलब्धेन संस्थापदस्य ज्ञानार्थकत्वमुचितमित्यभिप्रायेण स्मृतिं प्रदर्शयति-*ज्ञानेन त्विति*। नन्वेतद्दूषणं

ज्ञानं न संस्था द्विषतोऽपि ज्ञाने तदसंस्थितेः ।

चित्तद्रवीभावहेतू रागः संस्थापदोदितः ॥१२॥

सम्प्रीतिज्ञानसंस्थात्वे संस्थात्वं लाघवाद्रतेः ।

नैव तच्च धियोऽभावात्समुच्चयविकल्पयोः ॥१३॥

भ० गी० ५-१६) इत्यादिप्रमाणाद्ज्ञानाज्ञानयोर्विरोधात्समानविषयत-याऽज्ञाननाशकस्य, अत एव वृत्त्यन्तराविरोधितया संस्थापदव्यपदे-श्यत्वम् । "नाभिप्रायस्य मोक्षोपदेशात्" (ब्र० सू० अ० १ पा० १ सू० ७) इतिबादरायणीयसूत्रेऽपि तथावगमात् । अपि च ब्रह्मसंस्था न

न संस्थापदस्य ज्ञानार्थकत्वे प्रमाणं, यतो ज्ञानेनेतितृतीयया साधनबोधिकयाऽज्ञाननाशने ज्ञानं साधनमित्येव ज्ञायते, तया च ज्ञानरूप-साधनयुक्तमन्यत्किमप्यज्ञाननाशकं स्यादित्यत आह-*ज्ञानाज्ञानयोरिति* । एवञ्च ज्ञानमेवाज्ञाननाशकं लभ्यते । लोकेऽपि यथा तेजसा तमो नष्टमित्युक्ते तमोविरोधि तेज एव तमोनाशकं लभ्यते न तु तद्युक्तमन्यत्किमपि तथात्रापीति भावः । ननु घटविषयकज्ञानदशायां पटविषयकमज्ञानमस्त्येव न तु तद्ज्ञानेन तदज्ञाननाश इत्यत आह-*समानेति* । एवञ्च समानविषयकज्ञानं तद्विषयका-ज्ञाननाशकमितिस्वीकारे न काप्यनुपपत्तिरिति भावः । नास्मिन्नेव भक्तिसूत्रे संस्था-पदस्य ज्ञानमर्थः, किन्तु तत्सदृशबादरायणीयसूत्रेऽपि तदर्थकत्वं तस्य लभ्यत इत्याह-*बादरायणीयेति* ।

एवञ्च संस्थापदस्य ज्ञानार्थकत्वे सिद्धेऽपि कश्चित्कदाचिद्वदेदित्थम्-भवतु संस्था ज्ञानं, तथापि संस्थापदस्य ज्ञानभक्तिरूपोभयार्थकत्वस्वीकारे का हानि-रधिकारिभेदेन ज्ञानमपि मोक्षसाधनं भवेद्भक्तिरपीत्यत आह-*अपि चेति* ।
यदि भक्तेः कैवल्यप्रयोजनं कथञ्चित्सिध्येत तर्हि तथा वक्तुं शक्येत, परन्तु

भक्तिर्न वा भक्तिः कैवल्यहेतुः। तथाहि। किं शुद्धविषया भक्तिः कैवल्यहेतुः, सगुणविषया वा। नाद्यः। दुःखहेत्वज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वात्। शुक्तिरजतविभ्रमादौ तथादर्शनात्। नान्त्यः सगुणभजनस्य चित्तशुद्धावुपयोगेन कैवल्याहेतुत्वादितिप्राप्ते-उच्यते। शास्त्रज्ञानवत्स्वपि द्विषत्सु संस्थात्वव्यवहाराभावेन संस्थापदशक्यतावच्छेदकतयाऽवगतरागत्वाभावेन ज्ञानस्य संस्थात्वाभावात्।

---

तदेव न सिध्यतीत्याशयेन शुद्धसगुण-भेदेनाराध्यद्वैविध्यं परिकल्प्योभयविधविषयापि सा न कैवल्यहेतुरित्याह-*किं शुद्धेति*। *दुःखहेत्विति*। अयमभिप्रायः। शुक्तिरजतविभ्रमादौ शुक्तिरूपाधिष्ठानसाक्षात्कारणैव रजतरूपविभ्रमनिवृतेर्लोके दर्शनेन, "ज्ञानादेव तु कैवल्यम्" इतिश्रुत्यैवकारघटितया ज्ञानातिरिक्तमोक्षसाधनस्य निषधेन च दुःखहेतुपरमात्मस्वरूपविषयकाज्ञानस्य ज्ञानैकनाश्यत्वादिति। *चित्तशुद्धाविति *। उक्तञ्च श्रीमद्भागवते "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशुवैराग्यं ज्ञानं यत्तदहेतुकम्"॥ तथा "केचित् केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः"॥ इति च *संस्थात्वव्यवहाराभावेनेति *। इदमाकूतम्। संस्थाशब्दस्य ज्ञानार्थकत्वे यथा शास्त्रज्ञानवतो भक्तस्य संस्थात्वव्यवहारस्तथा शास्त्राज्ञानवतोऽभक्तस्यापि तथा व्यवहारः स्यात्, परन्तु लोके तथा व्यवहारस्यादर्शनात्संस्थापदशक्यतावच्छेदकं ज्ञानत्वं नैव वक्तुं शक्यं. किन्तु भक्ते दृष्टस्य विशेषरागत्वस्यैव कल्पनीयमेवञ्च ज्ञानं न संस्थापदशक्यम्।

ननु सर्वश्रेष्ठगुणसहितसम्पूर्णार्थकज्ञानमेव संस्थेति कल्पने भक्ते तादृशाखण्डार्थकज्ञानं विद्यते, शत्रौ च किञ्चिद्धर्मसहितखण्डार्थकं ज्ञानमस्तीत्यनस्तत्रतार-

अखण्डार्थज्ञानमपि न संस्था । किं तु चित्तद्रवीभावहेत्वनुराग एव । नच प्रीतिद्वारकं ज्ञानं संस्था । लाघवात्प्रीतेरेव तत्त्वौचित्यात् । न च तदधिकारिभेदेन द्वयोः संस्थात्वमभ्युपेयमिति वाच्यम् । ब्रह्मावाप्तिं प्रति ज्ञानभक्त्योःसमुच्चयस्य विकल्पस्य

---

शक्यद्वाराभावेन ज्ञानस्य संस्थापदशक्यत्वस्वीकारे का हानिरित्यभिप्रायेणाह-*अखण्डार्थेति* । तथा कथञ्चित्कल्पनेऽपि किञ्चिद्धर्मसहितज्ञानवत्स्वपि भक्तेषु संस्थात्वव्यवहारदर्शनेन रागविशेषस्यैव संस्थापदशक्यत्वकल्पनमुचितमत एव श्रीमन्महाभारतीयचिरकारिकोपाख्यानीये "विमृश्यते न कालेन पत्नीसंस्थाव्यतिक्रमः । सोऽब्रवीच्च भृशं तप्तो दुःखेनाश्रूणि वर्तयन्" ॥ इतिश्लोके 'पत्नीसंस्थाव्यतिक्रमः' इतिपदेन पतिविषयकभक्त्यतिक्रम उक्तः सङ्गच्छते । ननु ज्ञानमेव संस्था । यद्यपि ज्ञानस्य संस्थात्वे पूर्वोक्तमनुपपत्तिरस्त्येव तथापि मोक्षस्य साधने ज्ञानमेव समर्थम् । संस्थापदेन श्रुतौ ज्ञानीयव्यापारोऽनुरागविशेष एवोक्तो न तु तेन ज्ञानस्य मोक्षसाधनत्वं व्यावर्त्यते । व्यापारेण व्यापारिणोऽन्यथासिद्धेरभावादितिचेदत आह-*लाघवादिति* । अयमभिप्रायः । करणलक्षणे व्यापारवदितिपदस्य नास्त्येवोपयोगः । तच्च व्यापारेऽतिव्याप्तिवारणार्थं दीयते । परन्तु व्यापारस्य करणत्वस्वीकारे न कापि हानिः, प्रत्युत करणलक्षणे व्यापारवत्पदस्याकरणेन साक्षाद्व्यापारस्य करणत्वसंभवे तद्द्वारान्यस्य करणत्वकथनस्य गौरवेण च लाघवमेव । अत एव ग्रन्थकाराणां 'तस्माल्लिङ्गपरामर्शोऽनुमानम्' 'तच्चलिङ्गपरामर्शः' इत्यादयो लेखाः सङ्गच्छन्त इति ।

चाभावात्, तयोरङ्गाङ्गिभावतया तथात्वासंभवस्याग्रे वक्ष्यमाणत्वात्। नन्वज्ञाननाशेन ब्रह्मावाप्तौ न किंचिद्व्यवधायकमस्ति येन तदपसारणाय भक्तिरपेक्ष्येतेति चेत्सत्यं, अज्ञाननाशस्य सुखदुःखाभावान्यत्वेन स्वतोऽपुमर्थत्वात् भगवत्प्रीतेरेव स्वप्रकाशनिजसुखसंविदालिङ्गितत्वेन सुखरूपाया ज्ञानसाध्यतया पुमर्थकोटिप्रविष्टतयापेक्षित-

※अङ्गाङ्गिभावतयेति※। अयमभिप्रायः। यत्राङ्गप्रधानभावोऽस्तिय न तत्र फलसाधनेऽङ्गप्रधानयोः समुच्चयो विकल्पो वा स्वीक्रियते यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति श्रुत्या स्वर्गसाधनत्वेन श्रुतयोर्दर्शपूर्णमासयोर्न प्रयाजादिभिरङ्गैः सह समप्रधानसाधनत्वरूपसमुच्चयो न वा व्रीहियववद्विकल्पोऽङ्गीक्रियते स्पष्टमेतत्पूर्वतन्त्रविदाम्। तथा प्रकृतेऽपि "दानव्रततपोहोमजपस्वाध्यायसंयमैः। श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते"॥ इति श्रीमद्भागवतस्थवचनघटक'अन्यैः'पदेन ज्ञानादीनां स्वीकारेण तथा "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः"। इतिश्रीमद्भगवद्गीतास्थवचनेन च ज्ञानस्य भक्त्यङ्गत्वबोधनेनाङ्गप्रधानयोः समसाधनत्वरूपसमुच्चयस्य तथा स्वाभावाधिकरणवृत्तित्वविशिष्टस्वफलसाधकत्वं यत्र तत्र विद्यमानस्वरूपविकल्पस्याप्यभाव एवेति। ग्रन्थकारेणाप्यग्रे वक्ष्यते।

ननु ज्ञानं स्वत एवाज्ञानं विनाश्य मोक्षसाधनं भवतु न चाज्ञाननाशानन्तरं मोक्षप्रतिबन्धकं किमप्यस्ति यतस्तन्नाशार्थं ज्ञानानन्तरं भक्तेरपेक्षेत्यभिप्रायेणाह—※नन्विति※। ※सत्यमिति※। शङ्कायाः सत्यत्वेऽपि तथा स्वीकर्तुमशक्यम्, यतो मनुजस्य सुखार्थं दुःखाभावार्थं च प्रवृत्तिः, अज्ञाननाशस्य तयोर्मध्येऽन्यतररूपत्वाभावेन चापुमर्थत्वेनाज्ञाननाशार्थं -ज्ञानसाधने

## (तयोपपत्त्याच्च ।१।१।५)

त्वात् । तत्साध्यता तु ब्रह्मावाप्तौ वैज्ञानिक्यावयोः समाना । तस्मा-द्भक्तिर्ज्ञानफलं, भक्तिफलं च कैवल्यमितिसिद्धम् ।

वस्तुतो भगवद्गुणगणश्रवणादिजनिततद्द्रुतिरूपायां मनोवृत्तौ विभावादिभी रसरूपतयाभिव्यक्तो भगवदाकारतारूपरत्याख्यः स्थायीभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोग

---

पुरुषप्रवृत्तेरशक्यतेतिभावः । *वैज्ञानिकी* । विज्ञानसिद्धेत्यर्थः ।

"सालोक्यसार्ष्टिसामीप्यसायुज्यमेकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥" तथा "आत्मारामापि मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहेतुकीं भक्तिमित्थंभूतगुणो हरिः ॥" इत्यादिश्रीमद्भागवतीयवचनैश्च भक्तेर्धर्मार्थकाममोक्षापेक्षया स्वतन्त्रपुरुषार्थत्वस्वीकरणमेव योग्यमित्यभिप्राये-णाह-*वस्तुत इति* । *द्रुतिरूपायां मनोवृत्ताविति* । एतन्मते मनो नैयायिकवन्नाणुरूपं, न वा प्राभाकरवद्व्यापकं, न वा सौगतवत्समनन्तरप्रत्यय-रूपं किन्त्वपञ्चीकृतपञ्चमहाभूतारब्धं सत्वप्रधानं सङ्कोचविकाशशीलं स्वच्छ-द्रव्यं चक्षुर्वन्मूर्तद्रव्याभिघातयोग्यं देहपरिमाणमित्यङ्गीकरणेन द्रुतिरूपमनो-वृत्त्यङ्गीकरणे न शङ्कापङ्ककलङ्क इति ।

*विभावादिभिरिति* । आदिपदेनानुभावव्यभिचारिभावग्रहणम् । तत्र विभावः-विभावयतीतिव्युत्पत्त्या रत्यादेरालम्बनोद्दीपनरूपं कारणं, अनु-भावश्च-अनु विभावस्य-पश्चाद्भवतीति व्युत्पत्त्या नेत्रविक्रियादि कार्यं, व्यभिचारिभावश्च विशेषादभितः स्थायिनं यश्चारयतीति व्युत्पत्यानुभाव-रूपकार्यस्य रत्यादिनोत्पादे सहकारिभूतमुत्कण्ठादिकं चोच्यत इति । ननु लोके पुरुषार्थचतुष्टयं प्रसिद्धं तदा कोऽयं नूतनो भक्तिरूपपञ्चमपुरुषार्थ इत्यत

इति । तस्यैव परमपुमर्थत्वम् । लाघवेन सुखमात्रस्यैव पुरुषार्थत्वकल्पनात् । इच्छाजनकत्वे हि ज्ञानस्य सुखविषयत्वमेवावच्छेदकं न तु सुखदुःखाभावाज्ञाननाशाद्यन्यतमविषयत्वं, गौरवात् । दुःखाभावस्य सुखनान्तरीयकत्वाद् व्यापकतया तदर्थत्वेनान्यथासिद्धेश्च । एवमज्ञानाभावस्य सुखस्थित्यहेतुत्वात्, सुखं च न तादृशं, यदा दुःखाभावस्तदा सुखमिति नियमाभावात्, सुषुप्त्यादौ व्यभिचारात् । न वा सुखमज्ञाननाशार्थम् । तस्मात्सुखस्यैव स्वतन्त्रपुमर्थत्वाद्भक्तियोगस्यापि

आह—*सुखमात्रस्यैवेति* । अयं भावः । धर्मार्थकामानां स्वतः पुरुषार्थत्वं नाङ्गीक्रियते, किन्तु तज्जन्यसुखस्यैव पुरुषार्थत्वं, तत्रापि गौरवेणाननुगमेन च धर्मजन्यत्वादिविशेषणं परित्यज्य केवलं सुखमात्रं पुरुषार्थ इत्येव सिद्धान्तो यदि, तदा योगशास्त्रीयसमाधिसुखस्य यथा स्वतन्त्रपुरुषार्थत्वमङ्गीक्रियते तथाऽत्रापि कल्प्यतामिति । नन्वयमभिप्रायस्तदा सिद्ध्येत यदा सुखस्य पुरुषार्थत्वं सिद्ध्येत, परन्तु लोके पाककरण-कण्टकनिष्कासन-अज्ञाननाश-प्रवृत्तिदर्शनेन सुख-दुःखाभाव-अज्ञाननाशरूपत्रिविधपुरुषार्थस्वीकारस्यावश्यकत्वमित्यत आह—*इच्छाजनकत्वे हीति* । यद्यपि लोके त्रिविधकार्यार्थं प्रवृत्तिरवलोक्यते, तथापि तत्रापि सुखं मे भवत्विती च्छैवाभ्यन्तरलीनास्तीति सुखविषयत्वमेवेच्छाजनकत्वे ज्ञानावच्छेदकं सम्यगितिभावः ।

ननु तदा दुःखभावस्य क्वोपयोगः, सुखार्थत्वेनोपयोगे स्वीक्रियमाणे वैपरीत्यं कुतो न वाच्यमित्यत आह—*दुःखाभावस्येति* । *सुखनान्तरीयकत्वादिति* । सुखकालेऽवश्यंभावात् । *अन्यथासिद्धेश्चेति* । व्यापकत्वं व्याप्यस्थितिहेतुत्वेनान्यथासिद्धमिति भावः । *सुखस्थितीति* । सुखास्तित्वकारणत्वादित्यर्थः । ननु विनिगमनाविरहात्सुखस्य दुःखाभावव्यापकत्वमस्त्वित्यत आह—*नियमाभावादिति* । *सुषुप्त्यादाविति* । आदिपदेन प्रलयस्य ग्रहणम् । तस्मिन् काले दुःखाभावसत्त्वेऽपि सुखस्यासत्त्वमेव ।

ज्ञानं कैवल्यहेतुर्वा न वा हेतुरदोऽमृते ।
अज्ञाननाशे ज्ञानेन न द्वारान्तरदर्शनम् ॥१४॥
ज्ञानवद्द्विपतोऽदृष्टं कैवल्यं तदसंस्थितेः ।
व्यभिचारादतो नैव ज्ञाने कैवल्यहेतुता ॥१५॥
भक्त्युपायतया साक्षादफलं चामृतं प्रति ।
ज्ञानं तदन्यथासिध्दं प्रीत्या यागादिकर्मवत् ॥१६॥
स्वजन्यभक्तिसंबन्धाद्धेतौ दोषक्षतेरपि ।
सुखं प्रति रतित्वेन हेतुतावश्यकी लघु ॥१७॥

दुःखासंभिन्नसुखत्वेन मोक्षान्तर्गततया स्वतन्त्रतया वा पुमर्थत्वमिति निरपवादम् ( ११-१३ ) ।

वर्णकान्तरमाह-*ज्ञानमिति* । ज्ञानं कैवल्यहेतुर्वा नवेति संदेहे-

---

ननु पञ्चमपुरुषार्थकल्पनं लोकविरुद्धमित्यत आह-*मोक्षेति* । यथा योगजसमाधिसुखस्य मोक्षसमीपवर्तितया मोक्षान्तर्गतत्वं तथा भक्तेरपि मोक्षसुखसदृशत्वेन तदन्तर्भावं स्वीकृत्य न लौकिकप्रसिद्धि-हानिरिति भावः । *स्वतन्त्रतयेति* । अस्याभिप्रायस्तूक्त एव ।

सूत्रार्थस्तु-ब्रह्मसंस्थेतिसमासघटकसंस्थापदेन ब्रह्मज्ञानं स्वीकर्तव्यमितिचेन्न द्विषतोऽपि-द्वेषं कुर्वतोऽपि शिशुपालेन्द्रादेः । ज्ञानस्येतिपदं मत्वर्थीयार्श-आद्यजन्तम् । तथा च ज्ञानवतोऽपीत्यर्थलाभः । तत्संस्थत्वव्यवहाराभावात्-तत्संस्थपदेन व्यपदेशाभावात् । अथवा ज्ञानेतिपदं केवलज्ञानपरमेव । तथा च द्वेषं कुर्वतोऽपि शिशुपालस्य यद्भगवद्विषयकं ज्ञानं तत्संस्थापदेन न व्यवह्रियत इत्यर्थः ।

एतदधिकरणस्थान्यसूत्रार्थस्तु-ज्ञानमितिपदस्याध्याहारेण करणीयः। तथा-भक्त्या। यस्माद् ज्ञानमुपक्षीणमतो मोक्षे न ज्ञानं साधनं किन्त्वनुपक्षीणा भक्तिरिति ।

प्रथमतश्चतुर्थाधिकरणमाक्षेपसंगत्या तृतीयाधिकरणेन सह योजितं, संस्थाशब्दास्यार्थविचारणाया ज्ञानारूपार्थं खण्डयित्वा भक्तिरूपार्थः स्थापितः । अधुना चतुर्थाधिकरणं मोक्षे ज्ञानं स्वतन्त्रं न कारणं किन्तु भक्तिरित्यभि-प्रायेण योजनीयमित्याह-*वर्णकान्तरेति* । कारिकास्थादस्शब्देन ज्ञानम-

अदो-ज्ञानं, अमृते-कैवल्ये हेतुर्भवति । ज्ञानेनाज्ञाननिवृत्त्या वस्तुप्राप्तौ द्वारान्तरादर्शनात् । "ब्रह्म वेद ब्रह्मैव भवति"(मु० ३-२-६)इतिश्रुतेश्चेतिप्राप्ते-उच्यते । ज्ञानं न साक्षात्कैवल्यहेतुः, तदसंस्थितेर्ज्ञानवतोऽपि द्विषतः कैवल्यादर्शनेन व्यभिचारात् । प्रीतिहेतुज्ञानकारणतायां तु सुखं प्रति प्रीतिजनकत्वेन व्यापारेण यागादेरिव प्रीत्याऽन्यथासिद्धिः ।

---

भिप्रेतमित्याह-*अदो ज्ञानमिति* । ननु ज्ञानेन मोक्षप्राप्तावज्ञाननिवृत्तिरूपमेव द्वारं-तजन्यत्वे सति तत्प्रकाश्यप्रकाशकत्वरूपमस्त्येव । न चाज्ञाननिवृत्तेरभावत्वेन द्वारत्वाभाव इति वाच्यम् । सर्वत्र प्रतिबन्धकसंसर्गाभावस्य कारणत्वेन स्वीकारादित्यत आह-*द्वारान्तरेति* । अज्ञानिवृत्तेर्द्वाररूपत्वस्वीकारेऽपि तद्भिन्नभक्तेर्न द्वारत्वमिति भावः । *ब्रह्म वेदेति* । अस्य यो ब्रह्म जानाति स ब्रह्मस्वरूपो भवतीत्यर्थः । अनया श्रुत्या ब्रह्मज्ञानब्रह्मस्वरूपयोर्मध्ये भक्तिरूपकारणस्याकथनेनाश्रुतपदार्थाकल्पनादिति । सूत्रस्थ 'ज्ञान' इति पदमर्शआद्यजन्तमित्यभिप्रेत्याह—*ज्ञानवतोऽपीति* । ब्रह्मणि संस्थित्यभावबोधकस्य 'तदसंस्थितेः' पदस्य तात्पर्यार्थमाह—*कैवल्येति* ।

सुखं प्रति प्रीतेः कारणत्वं तां प्रति च ज्ञानस्य कारणत्वम्,एवं च सुखं प्रति ज्ञानकारणतायाः प्रीत्यान्यथासिद्धिरित्यभिप्रायेणाह—*प्रीतिहेत्वित्यादि* । *यागादेरिवेति* । अयमभिप्रायः । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिश्रुतिभिर्यागहोमयोः स्वर्गकारणत्वावगतावपि विनश्यतो यागादेः कथं कारणत्वमितिविचारे श्रुतार्थापत्त्या मध्ये पुण्यरूपमपूर्वं कल्प्यते । तथा च तस्यैव स्वर्गसाधनत्वेन यागादेः स्वर्गसाधनत्वस्यान्यथासिद्धिः । यद्यपि "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" इति श्रुतौ यज्ञादेरेव धर्मपदेन कथनाल्लोकेऽपि यागादेरेव धर्मपदेन प्रसिद्धत्वाच्च धर्मरूपयागादिरेव स्वर्गादेः साधनमितिप्रतिभाति, परन्तु "कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति

यद्यपि स्वजन्यभक्तिसंबन्धेन ज्ञानस्य कैवल्यकारणतायां दोषाभावस्त-
थापि कामिन्यादौ सुखविशेषं प्रति रतिविशेषत्वेनैव कारणतायाः
क्लृप्तत्वात् प्रकृतेऽपि लाघवाद्भक्तित्वेनैव कारणत्वमुचितम् । उदाहृत-
श्रुतिस्तु फलायोगव्यवच्छिन्नं कारणं करणमितिवदतां चाक्षुषादौ
चक्षुरादेरिव कैवल्ये ज्ञानस्य प्रयोजकतामादाय ।

---

कीर्तनात्" ॥ इत्यादिस्मृत्या कर्मनाशादिनदीसंबन्धधर्मकीर्तनादिना च धर्मनाश-
स्योक्तेर्धर्मपदेनापूर्वं पुण्यरूपमेव स्वीक्रियते । तथा च धर्मपदबोध्यापूर्वस्यैव
स्वर्गादिसाधनत्वे यागादेर्यत्स्वर्गसाधनत्वं श्रुत्योक्तं तत्परम्परयेत्यवश्यं वक्तव्यम्,
एवञ्च यागादेर्यथापूर्वेणान्यथासिद्धिस्तथा सुखसाधनत्वे प्रीत्या
ज्ञानस्यान्यथासिद्धिरिति ।

प्रीतेः स्वतन्त्रपदार्थतां स्वीकृत्य मोक्षकारणत्वकल्पनायां श्रुतेर्विरोधस्तद-
पेक्षया तस्याः सम्बन्धकुक्षौ निवेशेन ज्ञानजन्यप्रीतिरूपसम्बन्धेन ज्ञानस्यैव
मोक्षकारणत्वस्वीकारे न काचिदनुपपत्तिरित्यभिप्रेत्याह—*यद्यपीति* ।
लोकप्रसिद्धदृष्टान्तेनालौकिकार्थकल्पनमुचितम् । लोके च कामिन्यादौ सुखं
प्रति पत्यादिविषयकानुरागस्यैव कारणता दृष्टाऽतस्तथाकल्पनमनुचितमित्य-
भिप्रायेणाह—*तथापीत्यादि* । "ब्रह्म वेद ब्रह्मैव भवति" इतिश्रुतेर्विरोधं
परिहर्तुमाह—*फलायोगेति* । अयोगः—सम्बन्धाभावः, व्यवच्छिन्नं—अभाव-
युक्तमर्थात् फलसम्बन्धाभावाभावयुक्तम्, तच्च प्रकृते प्रयोजककारणरूपं ज्ञाना-
दिरेव । एतदभिप्रायेणैवान्यत्र 'व्यापारवदसाधारणं कारणं करणम्'
इतिकरणलक्षणं स्वीकृत्य चक्षुरादेरेव चाक्षुषज्ञानकारणता स्वीक्रियते न तु
व्यापारस्थानीयेन्द्रियविषयसंयोगादेरिति भावः ।

न च "ब्रह्मविदाप्नोति परम्" (तै० उ० २-१) इत्यादि-वाक्यबलात् ज्ञानत्वेनैव हेतुत्वं, तत्र च प्रतिबन्धकाभावः सहकारी, तस्य च ज्ञानसामग्र्यैवाज्ञाननाशतः सिद्धेर्न ज्ञानोत्तरं कैवल्यार्थं भक्तिरभ्युपेयते, प्रमाणप्रयोजनयोरभावादितिवाच्यम्। अनाहार्यद्वेषादेर्ज्ञानतो निवृत्तिसंभवेप्याहार्यद्वेषस्य ततो निवृत्त्यसंभवात्तदपगमाय भक्तेरावश्यकत्वात्। न वाऽऽहार्यद्वेषे बाधकाभावः, "उदरमन्तरं कुरुते,अथ तस्य भयं भवति" (तै० २-७) इत्यादिश्रुत्या ब्रह्म निर्गुणमद्वैतं नास्तीत्याहार्यद्वेषस्याप्यनर्थहे-तुत्वबोधनात्। उत्-अपि, अरं-अल्पं, अन्तरं-भेदं, कुरुते-साधयति। अल्पत्वमाहार्यधीपूर्वकत्वमेव, अन्यादृशस्य दुर्वचत्वात्। भयं-पुनःपुनर्गर्भजननजरामरणादिरूपम्।

---

एकस्याः श्रुतेस्तथार्थकत्वेऽपि सर्वासां श्रुतीनां स्वार्थं परित्यज्य तादृशार्थ-कत्वेन कथञ्चित्स्थापने गौरवेण भक्तेरश्रौतत्वेन प्रमाणाभावेन प्रयोजनाभावे-न च ज्ञानस्यैव मोक्षकारणत्वमुचितमित्यभिप्रायेण शङ्कते-*नचेति*। *प्रतिबन्धकेति*। सर्वत्र कार्ये प्रतिबन्धकाभावस्य साधारणकारणत्वेन प्रकृतेऽपि ज्ञानकारणैः प्रतिबन्धकीभूताज्ञाननाशसिद्धावनन्तरं च मोक्षसिद्धिरिति। *अनाहार्येति*। बाधकालिकेच्छाजन्यज्ञानविषयीभूतभिन्नः। *आहा-र्यद्वेषेति*। बाधकालिकेच्छाजन्यज्ञानविषयीभूतः। *निवृत्येति*। आहार्यद्वेषस्थले ज्ञानाज्ञानयोः समानकालिकत्वस्य समानाधिकरण-त्वस्य च दृष्टत्वेन तस्य ज्ञाननिवर्त्यत्वाभावात्। आहार्यद्वेषे श्रुतिं प्रदर्श्य तद्द्वारा भक्तेः श्रौतत्वं सप्रयोजनत्वं च स्थापयितुमाह-* न वेति *। भेदस्याल्पत्वं किञ्चिदज्ञानकृतमिति वक्तुं न शक्यते 'कुरुते' इति क्रियापदार्थ-विरोधात्। करणं च बुद्धिपूर्वकमेव। तथा च तदाहार्यधीपूर्वकमेव स्वीकार्य-मन्यस्यासंभवादित्यत आह-*अन्यादृशेति*। आहार्यद्वेषोत्सारकतया भक्तेरावश्यकत्वेऽपि तस्या अश्रौतत्वेन श्रौतज्ञानस्यैव कैवल्यकारणत्वं स्वीका-

किंवा तृतीयं तुर्यं च वेदान्तस्याविरोधतः ।
प्रकारान्तरतो वर्णकद्वयं प्रोच्यतेऽधुना ॥१८॥
कैवल्यसाधनं गौणभक्तिर्नो वा न साधनम् ।
तमेवेति श्रुतौ ज्ञानस्यैव साधनता यतः ॥१९॥
ज्ञानसामग्र्यधीनोऽस्याज्ञाननाशो यतो मतः ।
स्वजन्यज्ञानसंबन्धात्कैवल्यमथ भक्तितः ॥२०॥
वाक्यार्थाभेदधीरेव कारणं वा न कारणम् ।
समानविषयत्वेन ज्ञानादज्ञाननाशतः ॥२१॥
आपद्येत यतो मुक्तिर्द्विषतस्तदसंस्थितेः ।
नैतत्स्वजन्यसंबन्धाद्भक्तेः कारणता लघु ॥२२॥

नन्वस्तु तदुत्सारकतया भक्तिरावश्यकी, कैवल्यस्य हेतुत्वन्तु ज्ञानस्यैवेति चेन्मैवम् । अवश्यकल्प्यतादृशप्रतिबन्धकोत्सारकतावच्छेदक एव कैवल्यजनकतावच्छेदकात्मत्वकल्पनाया लाघवात् । शास्त्रप्रामाण्यस्य तुल्यतयाऽस्मद्दर्शितदिशैव शङ्कायाः समाधेयत्वादित्यास्तां विस्तरः ।

प्रकारान्तरेण तृतीयं चतुर्थं चारचयतीत्याह–*किं वेति* । लक्षणसूत्र ईश्वरेऽनुरक्तिः परा सा भक्तिरित्यर्थतो भावभक्तेः

---

र्यमित्याह—*नन्विति* । उत्तरमाह—*अवश्येति* । अयमभिप्रायः । श्रुतार्थापत्त्या प्राप्तस्यापि श्रौतत्वस्वीकारेण भक्तेः श्रौतत्वस्वीकारे बाधकाभावेनावश्यकल्पनीयस्याहार्यद्वेषरूपप्रतिबन्धकनाशकभक्तिरूपकारणस्य मोक्षजनकत्वकल्पनं ज्ञानस्य मोक्षजनकत्वकल्पनापेक्षयोचितमिति ।

श्रवणादिगौणभक्तेरपि कैवल्यकारणत्वं स्थापयितुं तृतीयाधिकरणं तथा गौणमुख्यभक्तित्वस्यैकस्याभावेनाननुगतकारणापेक्षयानुगतज्ञानस्यैव कारणत्वमुचितमित्याशङ्क्य परभक्तेः कारणत्वं च व्यवस्थापयितुं चतुर्थाधिकरणं योजयितुं शक्यमित्यभिप्रायेणाह–*प्रकारान्तरेणेति* । *परा सेति* ।

परत्वकथनेन फलत्वसूचनाच्छ्रवणादिनवविधभक्तेरपरत्वसूचनेन गौणत्वसूचनात्फलोपयोगित्वसूचनेन कैवल्योपयोगित्वमपि ज्ञापितम्। तच्च घटते घटते वेति संदेहे न घटते, "तमेव" (श्वे० उ० ३-८) इत्यादिश्रुत्या ज्ञानस्यैव कैवल्यकारणत्वावगमादिति प्राप्ते उच्यते। भवति गौणभक्तिः कैवल्यसाधनं ज्ञानाज्ञानयोरेककालिकत्वाभावेनाज्ञाननाशस्य प्रतियोगिसामग्र्यधीनोत्पत्तिकप्रागभावनाशस्येव ज्ञानसामग्र्यधीनोत्पत्तिकत्वस्यावश्यवक्तव्यतया गौणभक्तेरेव स्वजन्यज्ञानसंबन्धेन

---

इदमाकूतम्। भक्तिलक्षणसूत्रे विधेयद्वयेन वाक्यभेदस्तथा चैकवाक्यं 'सेश्वरेऽनुरक्तिः' द्वितीयं च 'सा' इतिपदमनुवर्त्य 'सा परा' इति। एवं च प्रथमवाक्येन जिज्ञासाविषयभूतभक्तेर्लक्षणमुक्तम्। द्वितीयेन च तस्याः परत्वरूपगौणफलस्वरूपत्वमुक्त्वा श्रवणादिगौणभक्तेरपि कैवल्यसाधनत्वं सूचितमिति। *श्रवणादीति*। आदिपदेन "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्"॥ इतिभागवतश्लोकोक्तकीर्तनादि स्वीकार्यम्। *तमेवेति*। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति सम्पूर्णश्रुतिस्वरूपम्। अस्याः श्रुतेः 'नान्यः पन्थाः' इत्यादिना पदकदम्बेन स्पष्ट एवान्यकारणाभाव उक्तः। अत्रापि पूर्वोक्तयुक्त्या भक्तिद्वारा ज्ञानस्य कारणतोच्यत इति मन्तव्यम्। एवञ्च गौणभक्तेर्न फलभूतभक्तिकारणताद्वारा मोक्षकारणत्वमितिभावः।

*एककालिकत्वाभावेनेति*। विनाश्यविनाशकयोरेककालिकत्व एव विनाशकेन विनाश्यस्य नाशः क्रियते। यथा घटस्य दण्डेन। तथा प्रकृते ज्ञानेन नाज्ञाननाश एककालिकत्वाभावात्। एककालिकत्वाभावमेवोपपादयति-*अज्ञानेति*। यथा घटप्रागभावस्य नाशः घटसामग्र्या मृत्तिकादिकया क्रियते न तु घटेन। घटकाले तस्य विनाशात्। तथा प्रकृतेऽपि ज्ञानकालेऽज्ञानस्यासंभवेन न ज्ञानेन तस्य नाशः किन्तु ज्ञानसामग्र्या श्रवणादिभक्तिरूपयैवाज्ञाननाशः। एवञ्च गौणभक्तेरेव स्वजन्यज्ञानरूपसंबन्धद्वारा मोक्षकारणत्वं "ब्रह्मसंस्थः"

कैवल्यहेतुत्वमित्यभिप्रेत्य "ब्रह्मसंस्थोऽमृतत्वमेति" (छां० उ०) इत्यादिना तथोपदेशात् । इदं च श्रवणादीनां भक्तावन्तर्भावम-भिप्रेत्य कैवल्येऽव्यवहितोत्तरत्वादिघटितं भक्तिवैशिष्ट्यमभिप्रेत्य वेति तृतीयन्यायार्थः । एवं सति लाघवाद्वाक्यार्थाभेदधीरेव स्वजन्यविजातीयबोधद्वारा कारणं नवेति संदेहे-भवति कारणम्,"ब्रह्म-वेद ब्रह्मैव भवति" (मु.३-२-६)इत्यादिश्रुतेः, समानविषयत्वेन साक्षा-द्वज्ञानतोऽज्ञाननाशतः फलसिद्धेः, सकलभक्तिसाधारणभक्तित्वस्यै-कस्याभावेनानुगतेन ज्ञानत्वेन कारणतायां लाघवाच्चेति प्राप्ते-उच्यते। नैतद्युक्तम् । तदसंस्थितेर्द्विषतोऽपि ज्ञानवतः कैवल्यापत्तेः । गौणभक्तिरूपसंस्थाजन्यतावच्छेदकवैजात्यावच्छिन्नस्य तथात्वे तु लाघवात्स्वजन्यज्ञानसंबन्धेन भक्तित्वेनैव कारणत्वमुचितम् ।

---

इतिश्रुतिघटकब्रह्मसंस्थापदेन ब्रह्मण्येव संस्था-श्रवणादिगौणभक्तिर्यस्येत्यर्थ-बोधकेन श्रवणादिगौणभक्तिः प्रतिपाद्यत इति भावः । ज्ञानस्य सम्बन्धकुक्षा-वप्रवेशेन गौणश्रवणादिभक्त्या ज्ञानं ततश्च परभक्तिद्वारा मोक्षः । एवञ्च सामान्यतो भक्तेर्न साक्षात्कारणत्वमित्यभिप्रायेण वा 'ब्रह्मसंस्थ'इतिश्रु-त्योक्तमित्यभिप्रायेणाह-*कैवल्य इति* । *लाघवादिति* । लाघवं चात्र भक्तित्वस्यैकरूपस्याभावेन ज्ञानस्य च तत्संभव इतिबोध्यमितिभावः ।

*वाक्यार्थाभेदधीरेवेति* । 'तत्वमसि" "अहं ब्रह्मास्मि" इत्यादिवाक्य-जन्या । *विजातीयेति* । विलक्षणबोधः, साक्षात्काररूप इत्यर्थः । घटप्रागभावस्थले घटसामग्र्या यद्यपि घटप्रागभावनाशो भवति तथाप्यत्रा-ज्ञानस्य ज्ञानेनैव नाशोऽङ्गीकरणीयो न तु ज्ञानसामग्र्या चक्षुरादिकयेत्य-भिप्रेत्याह-*ज्ञानत इति* । भक्तेरपेक्षया ज्ञानस्य कारणत्वमभिप्रेत्य पूर्वोक्त-लाघवं स्वयं प्रदर्शयति-*अनुगतेति* । अनुगमस्तु समानपदार्थवृत्ति-धर्मद्वारा भवति । अत्र भक्तेर्गौणमुख्यभेदेनानेकस्वरूपत्वेनानुगमकस्यैकस्य धर्मस्याभाव इत्यर्थः । *गौणभक्तीति* । वाक्यार्थाभेदज्ञानस्य मोक्षकारण-

न च भक्तित्वं नैकम्। रूढिनिरूढान्यतरसंबन्धेन भक्तिपदत्वस्यैकत्वात्। शिशुपालादीनां तु द्वेषाद्यनुबन्धादनवरतानुसंधानादितो निखिलपापक्षयेण प्रत्यक्षम्, ततो भक्त्या सिद्धिरिति मन्तव्यम्। अत एव विष्णुपुराणे (४-१५-६-१०) पुनरप्यतोऽच्युतविनिपातमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजकुलजन्माव्याहतं चैश्वर्यं शिशुपालत्वे चावाप। तत्र त्वखिलानामेव भगवन्नाम्नां त्वंकारकारणमभवत्। ततश्च तत्कालकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतानेकजन्मसंवर्धितविद्वेषानुबन्धिचित्तो विनिन्दनसंतर्जनादिषूच्चारणमकरोत्। तच्च

त्वस्वीकारे ज्ञानवतो द्विषतो मोक्षापत्तिस्तद्वारणाय गौणश्रवणादिभक्तिजन्यत्वं ज्ञानस्य स्वीकारे तदपेक्षयापि लाघवाद्गौणभक्तिजन्यज्ञानसम्बन्धेन गौणभक्तेरेव कारणत्वं योग्यमिति भावः। अननुगमदोषं वारयति–*रूढीति*। रूढिस्तु—शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्तिः। निरूढा चासति प्रयोजने शक्यसम्बन्धरूपलक्षणारूपा। एवं च प्रकृते रूढ्यादिनिरुक्तसम्बन्धेन भक्तिपदस्यैक्येनाननुगमस्यासम्भव एव।

ननु शिशुपालादेर्मुक्तिदर्शनेन ज्ञानवतोऽपि द्विषतः कैवल्यापत्तिरूपापत्तिरिष्टापत्तिरेवेत्यत आह–*शिशुपालादीति*। शिशुपालादीनां न द्वेषतो मुक्तिः किन्तु भक्त्येति सिद्धान्तं स्पष्टयितुं विष्णुपुराणस्थप्रघट्टकमुदाहरति-*विष्णुपुराण इति*। *अच्युतविनिपातेति*। अच्युतश्रीरामचन्द्रकृतविनिपातो–रावणादिदेहस्य नाशस्तत्फलमित्यर्थः। *त्वंकारकारणम्*। त्वं गोपोऽसि, त्वं कंसारिरसि, इत्यादिरीत्येतिभावः। मरणसमयेऽच्युतसुन्दररूपदर्शनं तत्काल एव भगवच्चक्रेण नाशोऽत एवान्यसंस्कारोद्बोधाभाव,

रूपमुत्फल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीटकेयूरकट-कोपशोभितमुदारपीवरचतुर्बाहुशङ्खचक्रगदापद्मधरमतिप्ररूढवैरानु-भावादटनभोजनस्नानासनशयनादिष्वशेषावस्थान्तरेषु नैवापर्ययाव-स्यात्मचेतसस्ततस्तमेवाक्रोशेषूच्चारयंस्तमेव हृदये धारयन्नात्मवधाय भगवद्धस्तचक्रांशुमालोज्ज्वलमक्षयतेजःस्वरूपं परब्रह्मरूपमपगत-रागद्वेषादिदोषं भगवंतमद्राक्षीत्, तावच्च भगवच्चक्रेणाशु व्यापादितस्तेन तत्स्मरणदग्धाखिलाघसंचयो भगवतैवान्तमुप-नीतस्तस्मिन्नेव लयमुपययौ'' इति। दग्धाघसंचयः प्रत्यक्षसमय एवान्तर्नीतस्तत्रैव लीन इति तात्पर्यार्थः।

न च कथं सगुणाभिनिवेशेन मुक्तिहेतुर्निर्गुणसाक्षा-त्कारो भवेदिति वाच्यम्। सगुणाभिनिवेशजन्यापूर्वेण प्राचीन-निर्गुणोपासनसंस्कारोद्बोधाभ्युपगमात्। वस्तुतः शिशुपालादेः सालोक्यादिमुक्तिरेवाभिप्रेयते। न तु भगवद्भावलक्षणा मुक्तिरत एव सप्तमस्कन्धे-(१-४६)

वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम्।
नीतो पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥

इत्युक्तिःसंगतेत्यास्तां विस्तरः। (१४-२२)।

---

प्रत्युत सर्वसंस्कारनाशेन मुक्तिरिति बोधयितुमाह-*रूपेति*। *तावच्चेति*। *दग्धाखिलाघसंचयेति च*। सगुणाभिनिवेशेन न सायुज्यरूपामुक्तिरित्य-भिप्रायेणाशङ्कते-*नचेति*। अत्र वास्तविकमतमाह-*वस्तुत इति*। सालोक्यम्-एकदेशस्थितिरूपम्। अत्रार्थे भागवतं प्रमाणयति-*सप्तमेति*।

द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः ।१।१।६

( न क्रिया कृत्यनपेक्षणाज्ज्ञानवत् ।१।१।७ )

( अत एव फलानन्त्यम् ।१।१।८ )

(तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवत्।१।१।६)

भक्ती रागो न वा रागो न भवेद्द ज्ञानसाधनम् ।
तत्साधनत्वावगमाच्छ्रवणादेः परिस्फुटम् ॥२३॥

रागो भक्तिः सरागस्य भक्तत्वरसिकत्वतः ।
न कर्म कृत्यसाध्यत्वान्न ज्ञानं तद्वदन्वयात् ॥२४॥

मुक्त्यै विचार्यता भक्तेरस्य तल्लक्षवर्णनम् ।
संस्थाख्यातस्ततो मुक्तिस्तस्याः संस्थात्वसाधनम् ॥

रसत्वाद्रागता तस्या द्वेषेणाथ विरोधतः ॥१॥

इति प्रथमाध्यायस्य प्रथमाह्निकम् ।

पञ्चमाधिकरणमारचयति-*भक्तिरिति*। भक्ती रागात्मिका न वेति संदेहे न रागात्मिका। "भक्त्या मामभिजानाति"(श्रीभ०गी० १८-५५) इत्यादिना ज्ञानसाधनत्वेनोक्ताया रागत्वायोगात्। "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ०२-४-५) इत्यादिना श्रवणादेरेव तत्साधनत्वावगमात्।"न चलति निजवर्णधर्मतो यः

साक्षान्मोक्षप्रापकत्वं भक्तेः साधितमधुना तस्याः स्वरूपविचारार्थं पञ्चमाधिकरणस्य योजनेत्यभिप्रेत्याह–*भक्ती रागेति*। *भक्त्या मामिति*। सम्पूर्णवचनं तु "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः। ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्" ॥ इतिभगवद्गीतास्थवचने भक्तेः ज्ञानस्य साधनत्वं ज्ञायते। तथा च रागरूपा सा न स्वीकर्तुं शक्येति भावः। अत्रार्थे श्रुतिमपि प्रमाणयति --*आत्मा वारे द्रष्टव्य इति*। *न चलतीति*। सम्पूर्णवचनं तु "न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे। न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि कृष्णभक्तम्" इति। ज्ञानस्य विहिताचरणप्रतिषिद्धवर्जनरूपकर्मणश्च क्रमशः 'सममति' पदेन 'न चलति निजवर्णधर्मतो यः' इत्यनेन चात्मप्राप्त्युपायोपदेशादितिभावः।

सम्मतिः" (वि.पु.) इत्यादौ ज्ञानकर्मान्यतरान्मत्वोपदेशात्त्वेति भ्रान्त-
भ्रमः । विष्णुपुराणादौ(४-४-४८)रामलक्ष्मणादीनां स्वर्गारोहणमुक्त्वा
"येऽपि भगवदंशेष्वनुरागिणः कोशलनगरजनपालास्तेऽपि तन्मनसस्त-
त्सलोकतामापुः" इत्यादिना सरागाणामेव भक्तत्वव्यपदेशात् । तथा
श्रीमद्भागवते "मुहुरहो रसिका भुवि भावुकाः" ॥ (१-१-३) इत्यादिना
भक्तानां रसिकत्वव्यपदेशेनाभिव्यक्तरागरूपायां भक्तौ रसशब्दात् .
कृत्यसाध्यतया कर्मणि, ज्ञानवतोऽपि भक्तिश्रवणेन ज्ञाने चानन्तर्भावा-
द्रागात्मिकैव भक्तिः । रागश्चात्र नेच्छामीतिप्रतीतिविषयेच्छादिरूपः ।
किं तु प्रीणाम्यनुरज्यामीति प्रतीतिसिद्धः पृथगेव श्रीमन्मुरपुरमथ-
नचरणारविन्दमकरन्दमन्दाकिनीमवगाहमानस्य मनसः समुल्लासो
रागभावप्रेमादिशब्दाभिधेयः सानन्दमाविर्भावयन् कार्यकारणलिङ्गा-
दिभिरभिव्यक्तो रसरूपी रत्याख्यः स्थायिभावो यो मोक्षमपि न्यक्क-
रोति । अत एवास्य सिद्धत्वज्ञानेऽप्यप्रतिबध्यत्वम् । यथा "दृष्टेऽपि
कृष्णे तृष्णेयं लोचने न विमुञ्चति" (वि०पु०) इत्यादि । ( २३-२४ )

इति भक्त्यधिकरणमालाटीकायां प्रथमेऽध्याये प्रथमाह्निकम् ।

---

भक्तेरनुरागरूपत्वं व्यवस्थापयितुं विष्णुपुराणीयसंदर्भं प्रदर्शयति-*विष्णुपु-
राणेति* । अत्रार्थे भागवतं प्रमाणयति-*श्रीभागवत इति* । अनुरागस्य
कर्मज्ञानयोरनन्तर्भावं साधयति-*कृत्यसाध्येति* । अभिलाषभिन्नरागस्वरूपं
लौकिकप्रतीत्या प्रतिपादयति-*रागश्चेति* । *कार्यकारणेति* । कार्यं
नेत्रविक्रियादिरनुभावरूपं, कारणमालम्बनोद्दीपनविभावरूपं भगवत्तुलसी-
चन्दनादिकम् । कार्यकारणपदसाहचर्येण लिङ्गयति-स्थायिनं चिन्नयतीति व्युत्पत्त्या
लिङ्गं व्यभिचारिभावरूपं निर्वेदादिकम् । *मोक्षमपीति* । "आत्मा-
रामाश्च मुनयः" "सालोक्यसार्ष्टिसामीप्य" इत्यादिपूर्वप्रदर्शितवचनैः
स्पष्टमिदम् । *सिद्धत्वज्ञान इति* । यद्विषयक एतादृशविलक्षणानुरागस्तस्य
स्वसन्मुखस्थितत्वेन सिद्धत्वज्ञानेऽपि नानुरागप्रतिबध्यत्वं सिद्धत्वज्ञानेऽपि
तस्य स्वीकारात् । वचनेनेदं साधयति-*दृष्ट इति* । प्रथमाध्यायप्रथमाह्निकस्य-
पञ्चाधिकरणैः सिद्धान्तितं प्रतिपाद्यं संकलयति-*मुक्त्यादीति* ।

क्रमेणास्मिन्नधिकरणे आगतानां सूत्राणामर्थः पूर्वसूत्रात्तृतीयान्तं 'तया'इतिपदमनुवर्त्य प्रकृतसूत्रार्थानुसारात्प्रथमान्तेन विपरिणामस्य स्वीकार्यम्। अथवा मयडुकल्पुत्या सा परानुरक्तिरीश्वरे' इति सूत्रघटकं 'सा' इतिपदमनुवर्तते। तथा च सा भक्ती रागरूपैव। कुतो द्वेषप्रतिपक्षभावात् द्वेषविरोधित्वात्। लोके हि द्वेष्टोऽयं भक्तोऽयमिति मिथो विरुद्धधर्मवति व्यवह्रियते। तत्र च द्वेषविरोधी राग एव प्रसिद्धो न ज्ञानादिः। किञ्च रसशब्दाच्च-श्रुतौ रसशब्दप्रयोगादपि भक्ती रागरूपैव। "रसं ह्येवायं लब्ध्वानन्दी भवति" इतिश्रुतौ ब्रह्मानन्दाविर्भावमुक्तेर्ब्रह्मविषयकरसस्य हेतुतावगम्यते। अत्र रसशब्देन राग एव स्वीकरणीयः। "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इत्यादौ रसपदवाच्यस्य विषयरागस्य प्रसिद्धत्वादिति।

न क्रियेति सूत्रेऽपि 'सा' इति पदमनुवर्तते। तथा च सा भक्तिर्न क्रियारूपा। कृत्यनपेक्षणात्-प्रयत्नानुविधानाभावात्। ज्ञानवत्-यथा ज्ञानं न क्रियात्मकं तथेति। तच्च प्रमाणसंपत्त्यधीनं न पुरुषेण स्वेच्छया कर्तुमकर्तुमन्यथाकर्तुं वा शक्यते, तथा भक्तिरपीति भावः।

अत एवेति सूत्रे 'सा न क्रियात्मिका' इति पूर्वसूत्रीयपदसम्बन्धेनार्थः करणीयः। यतः सा भक्तिर्न क्रियात्मिकात एव फलानन्त्यम्-तत्फलस्य निःश्रेयसस्यानन्तत्वमुपपद्यते। क्रियारूपत्वे तु तज्जन्यत्वेन मोक्षस्याप्यनित्यत्वं स्यात्। क्रियाजन्यस्यानित्यत्वं "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवात्र पुण्यचितो लोकः क्षीयते" इतिश्रुत्या प्रतिपादितम्।

ननु भक्तिपदेनापि लक्षणया ज्ञानमेवोच्यते। तथा च न "ज्ञानादेव तु कैवल्यम्" इत्यादिश्रुतिभिर्विरोधः, न वा पूर्वोक्तरीत्या समर्थनकरणापेक्षापीति शङ्कानिवारणार्थमन्तिमं "तद्वत" इति सूत्रम्। तद्वतः-ज्ञानवतः, प्रपत्तिशब्दात्-प्रपत्तिः भक्तिर्भवतीति वेदरूपगीतायां कथनात् न भक्तिशब्दो ज्ञानबोधकः। तथा च वचनं "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इति। अत्र दृष्टान्तः 'इतरप्रपत्तिवत्' इति। "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः" इत्यत्रास्मिन्नेव






प्रकरणे प्रपत्तिशब्देन भक्तिरेव ज्ञानानन्तरजायमाना स्वीक्रियते तद्वत्रापि स्वीकार्येतिभावः। चकारो हेत्वन्तरसमुच्चयार्थः। स च 'ज्ञानानन्तर्यश्रवणात्' इत्याकारकः। एवञ्च भक्तेर्ज्ञानानन्तर्यश्रवणं तदैवोपपद्येत यदा भक्तिशब्देन ज्ञानं न स्वीक्रियेत। प्रयोज्यप्रयोजकधर्मयोर्भिन्नाधिकरणत्वादिति।

प्रथमाध्याये प्रथमाह्निके पञ्चाधिकरणानि। नव सूत्राणि च। तैश्च भक्तेः स्वरूपं ज्ञानक्रियाभिन्नत्वं च निरूपितम्।

इति भक्त्यधिकरणमालाटीकाटिप्पण्यां संदिग्धार्थप्रकाशिन्यां प्रथमाध्यायस्य प्रथमाह्निकम्।

———o———

## अथ द्वितीयाह्निकम् ।

---

सा मुख्येतरापेक्षितत्वात् । १ । २ । १

( प्रकरणात् । १ । २ । २ )

( दर्शनफलमितिचेन्न तेन व्यवधानात् । १ । २ । ३ )

( दृष्टत्वाच्च । १ । २ । ४ )

( अत एव तद्भावाद्वल्लवीनाम् । १ । २ । ५ )

( भक्त्या जानानीतिचेन्नाभिज्ञया साहाय्यात् ।१।२।६ )

भक्तिर्मुख्या न वा मुख्या न भक्तिर्मोक्षसाधनम् ।
श्रवणादिसमुद्भूतं ज्ञानमेव श्रुतौ श्रुतम् ॥ १ ॥
मुख्या भक्तिर्ज्ञानसाध्या श्रुता स्वाराज्यसाधनम् ।
तरुण्यादिसुखे ज्ञानसाध्यरागस्य हेतुतः ॥२॥

अथ द्वितीयाह्निकम् । अत्र नवाधिकरणानि । तत्र प्रथममारच-यति-*भक्तिरिति* । भावभक्तिर्मुख्या न वेति संदेहे न मुख्या । "येनाहं

---

एवं मोक्षं प्रत्यनन्यथासिद्धायां भक्तौ ज्ञानयोगभक्तीनामङ्गप्रधानभावविवेकाय द्वितीयाह्निकस्य प्रारम्भः । तत्रापि ज्ञानं गौणभक्तिश्च व्यवस्थितं भक्तेरङ्गं न स्वतन्त्रं मोक्षसाधनमितिप्रतिपादनाय प्रथमसूत्रमित्याह-*भावभक्तिरिति* । भावभक्तिः

नामृता स्यां किमहं तेन कुर्यां यदेव भगवन् वेद तदेव मे ब्रूहि" इति (बृ० उ० २-४-४) मोक्षसाधनं प्रस्तुत्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" (बृ० उ० २-४-५) इत्यादिना श्रवणादिसाध्यतया ज्ञानस्यैव मुख्यत्वसूचनात्। ज्ञानं विनाऽज्ञाननिवृत्त-

परामुक्तिः । मुख्या मोक्षसाधनेष्वन्तरङ्गेत्यर्थः । *अमृतेति* । अमर्त्येत्यर्थः । *ज्ञानस्यैवेति* । "आत्मा वा अरे" इत्युपनिषद्वाक्यस्य शेषम्-तेनाग्रिमवाक्येन "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेदं सर्वं विदितम्" इत्याकारेण ज्ञानेन सर्वपदबोध्यब्रह्मज्ञानं भवतीति ज्ञायतेऽतो ज्ञानमेव कारणमितिभावः ।

यद्यप्यत्रान्यसाधननिषेधाभावेनान्यसाधनप्रतीतिरपि संभवति, तथापि "सर्वं वाक्यं सावधारणं भवति" इतिन्यायेन मोक्षसाधनेषु पृष्टेषु यद्यन्यदपि स्यात्तर्हि तस्याप्यवश्यवक्तव्यतया तदनुक्ति-पूर्वकज्ञानसाधनोक्तिः तदभावं साधयतीत्यभिप्रेत्य ज्ञानस्यैव साधनत्वमुच्यत इत्यर्थः । अपि च ज्ञानाज्ञानयोर्विरोधेनाज्ञाननाशने ज्ञानमेव समर्थम् । यद्यपि नाश्यनाशकयोः समानकालिकत्वमिष्यतेऽन्यत्र, तथाप्यत्राज्ञानस्थितिकाले ज्ञानाभावेऽपि ज्ञानस्याज्ञाननाशकत्वमङ्गीक्रियते । तमोनाशकत्वं तेजस इव । तथाहि । तमसः स्थितिकाले तेजोऽभावेन तेजसः स्थितिकाले तमोऽभावेऽपि तेजसा तमो नष्टमित्येव प्रसिद्धं लोके । तथात्रापि स्वीकारे बाधकाभावः । अत्रेदमाकूतम् । विनाशकाभावसमानाधिक-रणविनाश्यनाशनेऽसमानकालिकमपि विनाशकं हेतु । विनाशकाभावासमानाधिक-रणविनाश्यनाशने तु समानकालिकं विनाशकमपेक्ष्यते दण्डघटयोरिवेति । एतत्सर्वमभिप्रेत्याह–*ज्ञानं विनेति* ।

ननु तर्हि पूर्वोक्तं ज्ञानसामग्र्या अज्ञाननाशकत्वकथनं कथं संग

रसंभवेन मोक्षाभावप्रयोजकीभूताभावप्रतियोगित्वाद्येति प्राप्ते उच्यते। ज्ञानस्य श्रवणादिसाध्यत्वावगमेऽपि "एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति"

श्रुत इतिशङ्कासत्वरूपारुचेराह—*मोक्षाभावेति* । कार्याभावप्रयोजकीभूताभावप्रतियोगित्वं यस्य तस्यैव कार्याभावप्रयोजकीभूताभावनिवर्तकत्वं स्वीक्रियते । यथा घटरूपकार्याभावप्रयोजकीभूताभावो चक्रमृत्तिकाद्यभावस्तत्प्रतियोगित्वं चक्रमृत्तिकादेः । एवञ्च चक्रमृत्तिकादेर्घटरूपकार्याभावप्रयोजकीभूतमृत्तिकाचक्रा-भावस्य निवर्तकत्वं प्रसिद्धम् । प्रतियोगिनोऽभावस्य चैकाधिकरण्यविशिष्ट-समकालिकत्वमप्रसिद्धमेवेति युक्तमेव भिन्नकालिकस्यापि स्वसामग्रीद्वारा निवर्तकत्वम् । प्रकृतेऽपि मोक्षाभावप्रयोजकीभूताज्ञानस्य विनाशकत्वं स्वसामग्रीद्वारा विज्ञानस्येति सम्यगेवेतिभावः ।

*साध्यत्वावगमेऽपीत्यादि* । अयमभिप्रायः । "आत्मा वा अरे द्रष्टव्यः" इत्यादिवाक्ये श्रवणादेर्दर्शनसाधनस्य प्रतिपादनेन ज्ञानं साध्यतया प्रतीयते । अमृतसाधनेषु पृष्टेषु ज्ञानं विना परभक्तेः प्रायोऽसम्भवेन द्वारीभूतज्ञानस्य कथनेऽपि द्वाररूपान्तरङ्गभूतं परभक्तिरूपं मुख्यं साधनं नैव व्यावर्त्यते । यथा व्यापारेण व्यापारिणो नान्यथासिद्धिस्तथा व्यापारिणा तुल्ययुक्त्या व्यापारस्यापि नान्यथासिद्धिः । किन्तु व्यापारस्य साक्षाद्व्यापारिणस्तु तद्वारेति द्वयोः साध्यं प्रति साधनत्वम् । "सर्वं वाक्यम्" इति न्यायप्रवृत्तिस्तत्रैव भवति, यत्रोपकार्योपकारकभावरहितेषु विहितसाधनेष्वेकं प्रतिपाद्यते । यथा "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इति वाक्यस्थामिक्षासाधकदध्यानयन उक्ते दध्नैवामिक्षोत्पादनीया न तु तिन्तिण्याम्लद्रव्येण । यत्र तूपकार्योपकारकभावोऽस्ति द्वयोः पदार्थयोर्न तत्रास्य न्यायस्य प्रवृत्तिः । यथा "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इत्यादिवाक्यविहितामावास्यापौर्णमासीकालकर्तव्याग्नेयादियागैर्दर्शपूर्णमासो भवतीत्युक्तेऽपि प्रयाजादीनां न व्यावृत्तिस्तथा प्रकृतेऽपि न भक्तेर्व्यावृत्तिरिति ।

( छां० उ० ७-२५ ) इत्यत्राऽव्यवधानेनात्मरतेरेवानन्दं प्रति ज्ञानसाध्यतया साधनत्वोपदेशात्, तरुण्यादौ ज्ञानसाध्यरागस्यानन्दहेतुत्वदर्शनाच्च भक्तिरेवेतरसाधनैः स्वोपकार्यतयाऽपेक्षणान्मुख्या।

ननु 'पश्यन्' इत्यादौ 'स' इति तत्पदेन नात्मरतेरुपस्थापनम्। "तरति शोकमात्मवित्" ( छां०उ०७-१-३ ) इत्युपक्रान्तस्य वेदनस्य प्राकरणिकत्वेनोपसंहारे तदेकवाक्यत्वेन तच्छब्देन व्यवहितस्य 'पश्यन'



*अव्यवधानेनेति*। यत्राव्यवधानवत्पदप्रतिपाद्यार्थेनाकाङ्क्षाशान्तिस्तत्र व्यवहितपदार्थेनाकाङ्क्षाशान्तिकरणमनुचितमितिभावः। लोके दृष्टपदार्थानुसारेणैव वैदिकपदादिप्रतिपाद्यार्थकल्पनमुचितमित्याशयेनाह—*तरुण्यादाविति*। *इतरसाधनैरिति*। ज्ञानयोगादिभिरित्यर्थः। *स इति तत्पदेनेति*। "स स्वराड् भवति" इत्यत्रस्थिततच्छब्देनेत्यर्थः। *उपक्रान्तस्येति*। उपक्रमयुक्तस्येत्यर्थः। उपक्रमोपसंहारयोरेकार्थबोधकत्व एव तस्य महावाक्यस्यैकतात्पर्यबोधकैकवाक्यत्वम्। नोचेद्वाक्यभेदापत्तेः। अत एव "उपक्रमोपसंहारावभ्यासापूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये"॥ इत्यादिनाभियुक्तैः प्रतिपादितमुपक्रमोपसंहारयोः तात्पर्यनिर्णायकत्वं संगच्छते। उपक्रमे चात्मविदः शोकतरणमुक्तमत उपसंहारवाक्ये "एवं पश्यन्नेवं विजानन्" इत्यत्रापि शोकनिवारणे ज्ञानरूपकारणकथनमुचितम्। एवञ्च व्यवहितस्यापि 'पश्यतः' इति पदस्य सम्बन्धकरणमुचितमितिभावः।

ननूपक्रमोपसंहारयोरेकार्थप्रतिपादकत्वरक्षणलोभेन तत्पदेन 'पश्यतः' पदपरामर्शेऽपि तद्व्यापाररूपाया भक्तेर्निराकरणं कर्तुमशक्यम्।

एव परामर्शात्। किञ्च 'पश्यन्स्वराड् भवति' इत्युक्ते दर्शनोपाया-काङ्क्षायामेवं मन्वान एवं विजानन्नात्मरतिमित्यपानिना पदवृन्देन मनननिदिध्यासनभक्तयः क्रमेणोपायत्वेनोपदिश्यन्त इति सार्थक्यम्। रत्युपायोपदेशत्वेन सार्थक्ये पश्यन्नित्यादिव्युत्क्रमापत्तेः। अत एव "ध्यानयोगपरो नित्यम्" ( गी० १८-५२ ) इतिध्यानमुक्त्वा "ब्रह्मभूयाय कल्पते" (गी०१८-५३)इत्यनेन समाधिमभिधाय "मद्भक्तिं लभते पराम्" ( गी०१८-५४ ) इति परभक्त्युदयं निरूप्य "भक्त्या मामभिजानाति" ( गी० १८-५५ ) इति साक्षात्कार-मुपदिश्य "विशते तदनन्तरम्" ( गी० १८-५५ ) इतिमुक्तिफलमेव वर्णितं ज्ञानस्य श्रीभगवता। युक्तं चैतत्। "भिद्यते हृदयग्रन्थिः" (मु० २-२-६) "अज्ञानकल्पितं विश्वम्" इत्यादिश्रुतिस्मृतिवशादज्ञान-

---

व्यापारिणा व्यापारस्यान्यथासिद्धेरयोगादित्यरुचेराह—*किञ्चेति*। येन वाक्यघटकसर्वपदार्थानां सम्यक्तयाऽभ्युत्क्रमेण सार्थक्यं भवति स एव तद्वाक्यविवक्षितार्थः। नोचेत्तादृशार्थाबोधकवाक्यघटकपदोपादानं व्यर्थमेव भवेत्। एवं च प्रकृतेऽपि तत्पदबोध्यदर्शनस्य मनननिदिध्यासनादयः सर्वे क्रमश उपाया इत्यर्थाङ्गीकारे सम्यग्वाक्यार्थज्ञापने सम्भवति केवलरत्यु-पायप्रदर्शनेन तदितरपदार्थप्रदर्शनासङ्गतिकरणमनुचितमितिभावः।

श्रीमद्भगवद्गीतायामष्टादशाध्याये "ब्रह्मभूतः प्रसन्नात्मा" इत्यादिश्लोक-चतुष्टयेनायमर्थः श्रीभगवता कृष्णेनोक्त इतिबोधयितुं गीतास्थतत्प्रकरणसन्दर्भं प्रदर्शयति—*अत एवेति*। अपि च श्रुतिस्मृतिवचनानामेकवाक्यतया तात्पर्या-ऽऽलोचने विश्वमिदमज्ञानकल्पितमित्येव प्रतिभाति, तस्य नाशस्तु ज्ञाने-

मूलकबन्धस्य ज्ञानातिरिक्तहेतुनिवर्त्यत्वासंभवात् । तस्माद् ज्ञानमेव मोक्षहेतुतयेतरसाधनैः स्वोपकार्यतयाऽपेक्षणान्मुख्यम् ।

ननु लोकेऽनुरागस्य ज्ञानहेतुत्वं न दृष्टमतः कथमिदमिति चेन्न । अश्रुताज्ञातसविधागतनायकसाक्षात्कारे तरुणीरतेः कारणत्वदर्शनादिति चेन्नैवम् । 'पश्यन्' इतिवाक्यं वेदनस्य प्रकरणिनोऽपि वाक्यान्तरावगत-मोक्षसाधनत्वलिङ्गबलात्संनिहिततत्पदेन रतेरेव परामर्शौचित्या-

---

नैव कर्तुं शक्य इत्याह—*ज्ञानातिरिक्तेति* । 'तरुण्यादौ ज्ञानसाध्यराग-स्यानन्दहेतुत्वदर्शनात्' इत्युक्तं न सम्यग् । यतः सामान्यतस्तद्वस्तुविषयकज्ञानेन रागो भवति, रागेण च तद्वस्तुविषयकमुत्कृष्टं ज्ञानं भवत्ययमेव लोकेऽनुभवः । एवञ्च राग एव विशेषज्ञानस्य कारणं न तु ज्ञानं रागस्येत्यभिप्रायेणाह-*अश्रुतेत्यादि* ।

*लिङ्गबलादिति* । 'पश्यन्' इतिवाक्ये वेदनं यद्यपि प्राकरणिकं तथाप्य-न्यवाक्येषु "रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादिषु रतेर्मोक्षसाधनत्वश्रवणेन शब्दसामर्थ्यरूपलिङ्गबलेनास्मिन्वाक्येऽपि तत्पदेन रतेरेव परामर्श उचितः । इदमाकूतम् । उपक्रमोपसंहारयोः परस्परापेक्षतया प्रकरणविशेषरूप-त्वेनोभयाकाङ्क्षारूपप्रकरणापेक्षया शब्दसामर्थ्यरूपलिङ्गस्य प्राबल्यम् । उक्तञ्च पूर्वतन्त्रे-"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" इति । एवञ्च प्रकृते रतेः "रसं ह्येवायम्" इत्यादिषु श्रुतमोक्षसाधनत्वेन तद्रू-पलिङ्गबलयुक्तवाक्यप्रमाणेन प्रकरणस्य बाधात् तच्छब्देन रतेः परामर्शकरणमुचित-मिति । ननु रतेर्मोक्षो रत्युपायबोधने 'पश्यन्' इत्यादि व्यर्थं व्युत्क्रमयुक्तं चात आह-

त् । 'पश्यन्' इति तु श्रवणजापरोक्षाभिप्रायं न फलबोधाभिप्रायम्
अतो न 'पश्यन्' इति व्युत्क्रमापत्तिः । 'यो रतः स स्वराड् भवति' इत्युक्ते
रत्युपायाकाङ्क्षायां श्रवणमनननिदिध्यासनज्ञानानां क्रमेणोपायत्वेन
निर्देशात् । युक्तं चैतत् । अन्यथा श्रवणानुक्त्या न्यूनतापत्तेः । एते
नात्मरतिर्न भक्तिः किं तु क्रीडादिप्रायपाठाद्रतिरपि क्रीडामेव
एव, तथा च तत्तत्पदैः सुखविशेषा एवाभिप्रेतास्तेषां च दर्शनानन्त-
रीयकत्वेन तस्याङ्गत्वमात्रमिति निरस्तम् । रतेरनुरागरूपतायाः शतश
उद्घोषितत्वात् । क्रीडादयोऽपि रतिपरिणामा एव । एवं पश्यन्नेवं
मन्वानः-एवं रत एव । तथा च तत्तत्पदैरभिहितानां रतिविशेषाणामे-
वानन्दहेतुत्वलाभात्सिद्धं भक्तेर्मोक्षहेतुतया मुख्यत्वम् । मन्म-
ते तु ब्रह्मसाक्षात्कारवतो ब्रह्मरतिरेव नास्तीति प्रेम्णो न उपयोग इति
प्रकथनं युक्तम् ।

*परयेक्षितित्विति* । रतेर्मोक्षसाधनतयाङ्गीकार एव सम्यक्तया वाक्यलापनं
भवति नान्यथेत्याह-*यो रत इति * ।

ननु "तत्सहचरिताततत्सहचरितयोस्तत्सहचरितस्यैव ग्रहणम्" इतिन्यायेन
'आत्मक्रीड आत्ममिथुन' इत्यादिपदसाहचर्येण रतेः क्रीडाविशेषस्यैव
स्वीकारस्यावश्यकत्वेन तत्सहचरितानन्दपदस्यापि सुखविशेषरूपत्वेन, तस्य च
ज्ञानानान्तरीयकत्वेन तस्य ज्ञानसाधनकत्वमितिचेन्न । लोके रतेरनुरागरूपत्वेन
"य। एव लौकिकशब्दार्थास्त एव वैदिकाः" इतिन्यायेन रते रागरूपत्वस्वीकरण-
मुचितम् । तथा निश्चितार्थकरतिपदसाहचर्येण क्रीडामिथुनशब्दानामपि रतिवि-
शेषरूपार्थकत्वमेव स्वीकार्यमित्यभिप्रायेणाह-*एतेनेत्यादि* । एवं च 'आत्मा-
नन्दः' इत्यादिपदेनापि मोक्षरूपार्थस्वीकारेण साध्यसाधनभावबोधकविभक्ति-
रहितानामपि क्रीडारत्यानन्दपदानां "इषेत्वेति छिनत्ति" इत्यत्र यथा 'इषे त्वा'
इतिमन्त्रस्यच्छेदनाङ्गत्वं तथात्रापि मोक्षरत्योः साध्यसाधनभावबोधकत्वमित्यर्थः ।

ननु मोक्षस्य ज्ञानप्राप्यत्वमते ब्रह्मसाक्षात्कारिणो रतिरूपभक्त्यभा-
न न भक्तेर्मोक्ष उपयोग इतिचेन्न भागवतप्रथमस्कन्धीयवचनस्य
ह्मसाक्षात्कारिणोऽपि भक्तिकरणत्वबोधकस्यासङ्गत्यापत्तेरित्यभिप्रायेणाह-
न्मते त्वित्यादि* ।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ (भा०१-७-१०)
इत्यादिविरोधात् । नन्वस्ति रतिः परन्तु स्मरणकीर्तना.........
प्राचीना...............वामुक्तावनुपद प...............तत्र भक्तिःफ
.................तथा तात्पर्या................. नाभावे कथ......
........रीयकतया..................... नाशस्य..................

अस्मिन्नधिकरणे श्रीस्वप्नेश्वरमतेन तदनुसारिभवदेवमतेन तु सप्त सूत्राणि । "प्रागुक्तञ्च" इतिसप्तमं सूत्रं प्रकृतग्रन्थकारस्य चन्द्रिकासंज्ञकशाण्डिल्यभक्तिसूत्रटीकायां न स्वीकृतम् । परन्तु तत्र तस्य किञ्चिद्व्याख्यानदर्शनेनात्राधिकरणारम्भकसूत्रमात्रस्यैवोल्लेखदर्शनेनानिर्णयेऽपि तत्सूत्रहेत्वादिकस्यात्र दर्शनेनैतद्ग्रन्थपाठकानां बोधाय तस्याप्यर्थप्रदर्शनं क्रमेण सर्वसूत्रार्थप्रदर्शनानन्तरं क्रियते । तत्रास्याह्निकस्य प्रथमसूत्रस्यार्थः । सा--परानुरक्तिरूपा भक्तिः, मुख्या--मोक्षसाधनायान्तरङ्गभूता, इतरापेक्षितत्वात् इतरैः-आत्मज्ञानश्रवणादिगौणभक्तियोगैश्च स्वोपकार्यतयापेक्षणीयत्वात् ।

प्रकरणादितिसूत्रं केभ्यश्चित्पदेभ्य उत्तरं ज्ञेयम् । ननु "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिः" इत्यादिश्रुतौ रतेरधिकारिविशेषणत्वस्वीकारेण 'य आत्मरतः स एवं पश्यन्' इत्यन्वयस्वीकारेण रतेरप्राधान्यात्कथं रतिरूपभक्तेर्मुख्यत्वमित्यत आह--प्रकरणादिति । रतेरेवात्मानन्दादिफलकत्वेन तस्या एव प्रकरणप्रतिपाद्यत्वेन मुख्यत्वमिति ।

दर्शनफलमितिचेदिति-"ब्रह्मविदाप्नोति परम्" इतितत्प्रकरणस्यश्रुतौ ज्ञानस्यापि प्रतिपादकत्वेन ज्ञानस्यैव फलं मोक्षोऽस्त्विति चेत्, न—नैतद्युक्तं तत्कथम्, यतः तेन तत्प्रकरणेन "स स्वराड्भवति" इत्यत्र श्रुतेन, व्यवधानात्—प्रथमतोऽन्वयव्यतिरेकाभ्यामुपहितस्य ज्ञानस्य परामर्शकरणे प्रमाणाभावादित्यर्थः।

दृष्टत्वाच्चेति—लोकेऽन्वयव्यतिरेकाभ्यां सौन्दर्यज्ञानं तरुण्यास्तरुणरतिहेतु दृष्टं ननु रतेर्ज्ञानहेतुत्वमतोऽपि ज्ञानस्यैव भक्तिकरणत्वमिति।

अत एव तदभावाद्वल्लवीनामिति—यतो मुक्तिं प्रति भक्तिः प्रधानं न तु ज्ञानादिकं न वा ज्ञानसापेक्षा भक्तिरप्यत एव-अस्मात्कारणादेव, तदभावात्-ज्ञानाभावात्, प्रधानभगवदनुरागमात्रेण वल्लवीनां-गोपीनां, मुक्तिः पुराणप्रोक्ता सङ्गच्छत इतिशेषः।

भक्त्या जानातीतिचेन्नाभिज्ञया साहाय्यादिति। ननु "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इत्यत्र भक्त्येति बलीयस्या तृतीयाश्रुत्या उपकारकप्रकरणं बाधित्वा भक्तेर्ज्ञानाङ्गत्वं ज्ञायत इतिचेन्नैष दोषः, नात्र केवलज्ञानबोधकजानातिशब्दप्रयोगः कृतः किन्तु 'अभिजानाति' इति अभिज्ञया—सामान्यतोऽनुरागेण भक्तिरूपेण, साहाय्यात्-तस्य परमस्नुमकरा(?)दित्यर्थाङ्गीकरणेन न विरोधः, अत्र 'अभिज्ञतया' इतिपाठान्तरम्।

प्रागुक्तं चेति-प्राग्-"भक्त्या मामभिजानाति" इत्यस्य पूर्वं "ब्रह्मभूयाय कल्पते" इत्युक्त्वा उक्तं-"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इति। तस्य तु ज्ञातब्रह्मणो ज्ञानप्रयोजनाभावाद्युक्तमनुवादत्वमिति।

## एतेन विकल्पोऽपि प्रत्युक्तः । १ । २ । ७

ज्ञानभक्त्योर्विकल्पो वा न वास्त्येव स चानयोः ।
सामग्रीभेदतस्तत्तत्साधनेऽधिकृतावुभौ ॥ ३ ॥
न विकल्पो ज्ञानभक्त्योरङ्गाङ्गित्वेन संमतः ।
भिन्नाधिकारिके तत्तत्साधने स विलोक्यताम् ॥४॥

अथ द्वितीयमारचयति—*ज्ञानेति*। कैवल्ये ज्ञानभक्त्योर्विकल्पोऽस्ति नवेति संदेहेऽधिकारिभेदेन विकल्पः । भिन्नसामग्रीकत्वात् । तथाहि । ज्ञानसाधनं श्रवणादि । "द्रष्टव्यः श्रोतव्य" (बृ० उ० २-२३ ) इत्यादिश्रुतेः । प्रेमभक्तिसाधनं तु गौणभक्तिरेव । "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्"

---

*ज्ञानभक्त्योरिति* । यद्यपि ज्ञानस्य भक्त्यङ्गत्वस्थापनेन मोक्षाङ्गत्वशङ्का नैवोद्भवति तथाप्येककार्येऽङ्गाङ्गत्वेन स्थितस्य मुख्याङ्गाभावेऽङ्गाङ्गस्य तत्कार्यकर्तृत्वं दरीदृश्यते लोके । यथा प्रजापालनकर्मणि मुख्यत्वेन नृपः प्रवर्तते, तत्साहाय्यभूतत्वेन प्रधानः, परन्तु नृपाभावे सोऽपि तत्कार्यं करोति, तथात्रापि भक्त्यङ्गमपि ज्ञानं कदाचिद्भक्तिस्थित्यभावे स्वयं मोक्षरूपिकार्यं कर्तुमर्हत्येवेति । अपि च ज्ञानस्य पूर्वस्थापितमपि भक्त्यङ्गत्वं पुनरपि तत्साधनादिभेदप्रदर्शनेन मोक्षसाधनत्वमस्त्वधिकारिभेदेनेत्यादिना वाधिष्यत इति शङ्कोत्थितिर्द्रष्टव्या। *भिन्नसामग्रीकत्वादिति* । भिन्नपदं विरुद्धार्थबोधकम् । अन्यथाधिकारिभेदेन विकल्पाश्रयणे न भिन्नसामग्रीकत्वं हेतुः स्यात् यतो मुख्याङ्गस्याङ्गाङ्गस्य च भिन्नसामग्रीकत्वमस्त्येव । समसामग्रीकत्वे त्वङ्गत्वस्य अङ्गाङ्गत्वस्य चासम्भव एव । *यमेवैषेति* । यमेव—स्वात्मानं, एष—साधकः श्रवणादितत्परः, वृणुते-प्रार्थयते, तेन आत्मना वरिश्रा साधकेन परभक्तिद्वारा लभ्यते । तस्य—आत्मप्रेमकामस्य, एष-आत्मा, स्वां-स्वकीयां प्रेमोत्पादिकां, तनूं-विशुद्धसत्वप्रधानं शरीरं, विवृणुते-प्रकाशयतीत्यर्थकेनानेन श्रुतिवचनेन परभक्तेर्गौणभक्तिरूपं साधनं

( क० उ० २-२३ ) इत्यादिश्रुतेः । "भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनूम्" । ( भाग० ११-३-३१ ) इत्यादिस्मृतेश्च । श्रवणादावधिकारी साधनचतुष्टसंपन्नः । "शान्तो दान्त उपरतस्तितिक्षुः" ( बृ० उ० ४-४-२३ ) इत्यादिश्रुतेः । गौणभक्तावधिकारी मध्यमरागः । "न निर्विण्णो नातिसक्तः" इत्यादिस्मृतेः । इत्थं च भिन्नाधिकारिकसाधनसाध्यत्वान्मोक्षसाधनत्वेनावगतयोर्ज्ञानपरभ-

---

बोध्यत इति भावः । *भक्त्येति* । अत्र प्रथमभक्तिपदं "इतिभागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया । नारायणपरो मायामञ्जस्तरति दुस्तराम्" ॥ इत्युपसंहारवाक्यैकवाक्यतया भज्यतेऽनयेति भक्तिरिति करणव्युत्पत्त्या भागवतधर्मरूपश्रवणादिनवविधगौणभक्तिबोधकम् । द्वितीयं तु भजनं भक्तिरिति भावव्युत्पत्त्या प्रेमभक्तिबोधकम् । एवञ्च प्रेमभक्तेर्गौणभक्तिरेव साधनं सिध्यतीतिभावः ।

*श्रवणादाविति* । "श्रोतव्यः" इत्यादिश्रुतिविधेयश्रवणादावित्यर्थः । *साधनचतुष्टयसंपन्न इति* । साधनचतुष्टयं च ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमित्याकारकनित्यानित्यवस्तुविवेचनम् । ऐहिकानां स्रक्चन्दनवनितादिविषयभोगानां कर्मजन्यतयाऽनित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरक्तिरूपेहामुत्रार्थफलभोगविरागः । मनोनिग्रहेन्द्रियदमनादिरूपशमदमादिषट्कसंपत्तिः, मोक्षेच्छावत्वरूपमुमुक्षुत्वं च बोध्यम् ।

*न निर्विण्ण इति* । यः संसारान्नातिविरक्तो नात्यासक्तः स एव परभक्तावधिकारी । यश्चात्यन्तताऽऽसक्तो यश्चात्यन्तविरक्तस्तावुभावपि न भक्तावधिकारिणौ । यतोऽत्यन्तसंसाराऽऽसक्तस्य परमेश्वरे चित्तस्य सम्बन्ध एव न संभवति । अत्यन्तविरक्तस्य यद्यपि परमेश्वरे कदाचिच्चित्तगमनेऽपि तस्य सर्वथा विरक्तत्वेनानुरक्तिरूपभक्तेर्न तत्र संभव एव । अभावेन समं प्रतियोगिनः स्थितेरसंभवादितिभावः । *इत्थं चेति* । अधिकारिसाधनभेदस्थापने सतीत्यर्थः ।

क्त्योरधिकारिभेदेन भिन्नवाक्योपात्तत्वे सति तुल्यार्थत्वात् विकल्पः, षोडशिग्रहणाग्रहणवदितिप्राप्ते--उच्यते । तत्त्वज्ञानं प्रति भिन्नाधिकारिकयोः श्रवणादिविचारगौणभक्त्योर्विकल्पसंभवेऽपि मोक्षं प्रति तत्त्वज्ञानप्रेमभक्त्योर्न विकल्पः । द्वारैक्याभावेन विकल्पासंभवात् । व्रीहियवयोर्द्वारैक्यादेव विकल्पाभ्युपगमात् ।

*तुल्यार्थत्वादिति* । समप्रयोजनकत्वादित्यर्थः । तुल्यार्थत्वमात्रोक्तौ "अग्निहोत्रं जुहोति" "दध्ना जुहोति" अनयोरपि विकल्पापत्तेः । अस्ति हि दध्नः परम्परयाग्निहोत्रस्य च साक्षात्स्वर्गरूपसमप्रयोजनकत्वम् । भिन्नवाक्योपादानत्वमात्रोक्तौ "उद्भिदा यजेत पशुकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इतिभिन्नप्रयोजनकयोरपि दर्शपूर्णमासोद्भिद्यागयोर्विकल्पापत्तिरत उभयम्। *षोडशिग्रहणाग्रहणवदिति*। 'नातिरात्रे षोडशिनं गृह्णाति" "अतिरात्रे षोडशिनं गृह्णाति" इति वाक्यद्वयश्रवणेन षोडशिग्रहणमदृष्टजनकं षोडश्यग्रहणमप्यदृष्टजनकमित्यदृष्टरूपतुल्यफलजनकत्वाद्विकल्पः । अतिरात्रो-यज्ञविशेषः । षोडशी–पात्रविशेषः । तथापि मोक्षरूपफलस्य साधनमुभयमपि ज्ञानं भक्तिश्चातो विकल्पः । स च व्यवस्थितः । अद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानम् । द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्विका भक्तिरिति । अत एव भागवते कर्मत्यागावधित्वेन द्वयं—"तावत्कर्माणि कुर्वीत नो निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" ॥ इत्यनेनोपात्तं संगच्छत इति ।

भक्तिज्ञानयोर्गौणभक्तिश्रवणादिरूपाङ्गयोरधिकारिभेदेन वैकल्पिकत्वेऽप्यङ्ग-प्रधानरूपयोर्ज्ञानभक्त्योर्न विकल्पः संभवति । विकल्पप्रयोजकस्य द्वारैक्यस्यात्राभावादित्यभिप्रायेणाह—*तत्त्वमित्यादि* । * द्वारैक्यादेवेति * । अपूर्वरूपद्वारैक्यादित्यर्थः । साधनभूतयवैर्होमे कृते यदपूर्वं जायते तदेव व्रीहिभिर्होमे कृतेऽपि निष्पद्यतेऽतोऽपूर्वरूपद्वारस्यैक्यमेव । अत्र तु ज्ञानेनाज्ञाननिवृत्त्या परभक्तिप्राप्तिस्तया च परमात्मद्वयात्मप्राप्तिरितिभिन्नद्वारकत्वेन न विकल्प इत्यभिप्रायः । अत्र स्पष्टतया द्वारभेदस्य विद्यमानत्वेन द्वारैक्यप्रयोज्यविकल्पस्य संभवपूर्वकनिवारणार्थं कथं सूत्रकारस्य

यद्यप्यत्र द्वारभेद एव. भक्त्या भगवदनुग्रहेण ब्रह्मावाप्तिः, ज्ञानेन त्वज्ञाननिवृत्त्या सा। तथाप्येकप्रयोगविधिपरिगृहीतत्वाभावाद् द्वारभेदेऽप्युद्भिद्बलभिद्यागयोरिव विकल्पः स्यादेवेति चेन्नैवम्। उक्तप्रमाणात्तयोरङ्गाङ्गिभावेन विकल्पासंभवात्, प्रधानद्वारोपकारकत्वेन तुल्यार्थत्वाभावात्।

प्रवृत्तिरित्यत आह-* यद्यपीति *। द्वारभेदं प्रदर्शयति-* भक्त्येति*। भक्त्या ब्रह्मावाप्तौ भगवदनुग्रहरूपद्वारम्। ज्ञानेन तत्प्राप्तावज्ञाननिवृत्तिरूपद्वारमित्यर्थः। *सा*। ब्रह्मावाप्तिः। *एकप्रयोगेति*। यत्र द्वारैक्यं विकल्पप्रयोजकं तत्रैकविधिपरिगृहीतत्वमपि स्वीकार्यमन्यथा-केवलां समानापूर्वनिष्पादकत्वस्वीकारेऽग्निहोत्रहोमसाधनदधि-दर्शपूर्णमाससाधन-यवयोरपि विकल्पापत्तेः। यत्र चैकविधिपरिगृहीतत्वं नास्ति न तत्र द्वारैक्यं विकल्पप्रयोकं किन्तु द्वारभेद एव। यथा "उद्भिदा यजेत पशुकामः" 'बलभिदा यजेत" इति-पशुफलार्थं श्रूयमाणयागयोरेकविधिपरिगृहीतत्वाभावेनापूर्वरूपद्वारभेदेऽपि पशु-रूपैकफलसाधकत्वेन विकल्प आश्रीयते, तथात्रापि ज्ञानभक्त्योर्विकल्पः संभवतीतिभावः।

*उक्तप्रमाणादिति*। पूर्वप्रदर्शितश्रुत्याद्यनेकप्रमाणैस्तयोरङ्गाङ्गिभावस्य सिद्धत्वेन विकल्पप्रयोजकद्वारैक्याभावेन न विकल्प इत्यर्थः। ननूपकारकत्व-रूपद्वारैक्यमत्र भक्तेः साक्षाद्, ज्ञानस्य तु प्रधानभक्तिद्वारेति कथं विकल्पासंभव इत्यत आह---*तुल्यार्थत्वेति*। एकरूपसम्बन्धेन यत्रोपकारकत्वं तत्रैव तुल्यार्थत्वं शास्त्रलोकप्रसिद्धम्। यथा दर्शपूर्णमासे व्रीहियवयोरग्न्युत्पादने तृणारणिमणीनाञ्च। ननु लोके तथा स्वीकारेऽपि शास्त्रे "वचनात्प्रवृत्तिर्वचनान्निवृत्तिः" इतिन्यायेन व्रीहियवस्थले तथा वचनतः स्वीकारेऽपि भक्तिज्ञानस्थले उभयोर्मोक्षप्रापकत्वबोधकवचनानामुपलम्भेन वचनानां व्यवस्थया कथंचिदङ्गाङ्गिभावस्वीकारेऽपि मोक्षसाधनत्वमुभयोरपीत्या-

तस्य वक्ष्यमाणाप्रदोषदुष्टत्वाच्च । परन्तु तत्राधिकारिभेदेन साधन-भेदात् ज्ञानेऽपि ज्ञानतो भगवत्कृपातो वा भावे कैवल्यमन्यत्र न विवादः । अत एव स्वजन्यभावसम्बन्धेन ज्ञानत्वेन कारणतां विहाय लाघवाद् भावत्वेनैव कारणत्वमिच्छन्ति । युक्तं चैतत् । अन्यथा–

"क्वेमा स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृष्णे क्व चैष परमात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षा-
च्छ्रेयस्तनोत्यगदराज इवोपयुक्तः" ॥ (भा० १०-४७-५८)

इत्याद्यनेकवचनविरोधापत्तेः । अत एव न समुच्चयोऽपि । एक-प्रयोगविधिपरिगृहीतत्वाभावादत एव मोक्षमार्ग एक एव चेत्यास्तां विस्तरः । ( १-४ )

---

पादतः प्राप्तशङ्कात आह–* तस्य वक्ष्यमाणेति* । तत्रमाधिकरणे वर्णकान्तर-वर्णनप्रसङ्ग इत्यर्थः ।

*साधनभेदादिति* । श्रवणादिगौणभक्तिरूपादिसाधनभेदादित्यर्थः । *भाव इति* । प्रेमभक्तावित्यर्थः । एवञ्च भावापरपर्यायमुख्यभक्तेः साक्षात् साधनत्वे-न कार्ये संभवति परम्परया कारणतया स्थितस्य ज्ञानस्य मुख्यकारणत्वकथनं गौरव-ग्रस्तमित्याह–*अत एवेति* । विरोधप्रबोधकभागवतीयवचनमुदाहरति–*क्वेमा इति* । अस्यार्थः – परपुरुषसेवनाभासदोषदुष्टा अरण्यभ्रमणशीला इमा नार्यः कुत्र, तथा परमात्मस्वरूपे कृष्णे एतासां निरूढभावः–नितरां रूढं स्थितमनुरक्ति-रूपं प्रेम, यस्मात्स्वात्परमात्मानं प्रकाशयति, "तस्यैष आत्मा विवृणुते तनूं स्वाम्" इतिश्रुतेस्तत्कुत्र । युक्तं चैतदित्याह–नन्विति । परमात्मा साक्षादनु-भजतोऽज्ञस्याप्यमृतमिव श्रेयस्कर इति । भजनमेव परमात्मप्राप्तौ कारणं न ज्ञानमिति 'अविदुषः' इतिपदेन बोधितम् । * अत एवेति * । उक्तरीत्या ज्ञानस्य भक्त्यङ्गत्वेन स्थापनादेवेत्यर्थः । * एकप्रयोगेति * । इदं स्वरूपसमु-च्चयमात्रम् । अङ्गाङ्गिभावस्थापनेनैव समुच्चयस्य वारणसंभवात् । अन्यथा प्रयाजदर्श-पूर्णमासयोरपि स्वर्गफलसाधकत्वेन समुच्चयापत्तेः । इष्टमितिचेत् "प्रधानावृत्ता-वङ्गावृत्तिः" इतिन्यायेन यथा दर्शपूर्णमासादिविच्छिन्ने साङ्गप्रयोगस्यावृत्तिस्तथा प्रयाजादौ विच्छिन्नेऽपि सम्पूर्णप्रयोगस्यावृत्त्यापत्तिरिति । *एक एवेति* । भावपर्यायभक्तिरूप एवेत्यर्थः ।

## देवभक्तिरितरस्मिन्साहचर्यात् । १ । २ । ८

ज्ञानस्याङ्गं परा भक्तिर्नवाङ्गं ज्ञानसाधनात् ।
यस्य देवे परा भक्तिरित्यादिश्रुतिमानतः ॥ ५ ॥
गुर्वाद्याहार्यधीजन्यपरभक्त्युपदेशतः ।
समभिव्याहृतेर्देव ईशान्योऽतस्तथा न हि ॥६ ॥
मुख्याऽमृतफले भक्तिरङ्गं वा नो फलान्तरे ।
नाङ्गं सद्धेतुसाध्येयं साधनं न फलान्तरे ॥ ७ ॥
ईशवत्सर्वहेतुत्वं भक्तेरिच्छासमन्वयात् ।
कैवल्यं प्रति मुख्यायाः स्यात्कचिद्गुणभूतता ॥८॥

तृतीयमारचयति-*ज्ञानस्येति* । परभक्तिरपि ज्ञानस्याङ्गं नवेति सन्देहे-भवत्यङ्गम्

---

सूत्रार्थस्तु-एतेन ज्ञानस्याङ्गत्वनिर्णयेन, विकल्पः-आत्मप्राप्तौ भिन्नवाक्योपादेयत्वे सति तुल्यफलकत्वरूपः, ज्ञानपरभक्त्योरितिशेषः । प्रत्युक्तः-निराकृतः । अपिशब्देन समुच्चयस्यापि निराकरणं बोध्यम् ।

*परभक्तिरपीति* । यद्यपि पूर्वाधिकरणैर्ज्ञानस्य भक्त्यङ्गत्वविनिर्णयेनाङ्गभूतज्ञानस्य तत्प्रधानभूता भक्तिर्नाङ्गभावं भजते। भक्तेर्ज्ञानस्याङ्गत्वबोधकश्रुतयस्तत्रैव कथञ्चिद्व्याख्यानेन योजयितुं योग्याः। अतः सूत्रावश्यकत्वेऽपि नास्ति भिन्नाधिकरणस्यावश्यकता । तथापि लोके परस्परमपि साध्यसाधनभावो दरीदृश्यते । यथा गर्भस्थदासं प्रति पोषणादिना राजोपकरोति । सोऽप्यनन्तरमुत्पन्नः पुष्टश्च तं राजानमुपकरोति । तथात्रापि भक्त्या परिपुष्टं ज्ञानं भक्तिमुपकुर्यादित्यादिशङ्कानिराकरणार्थमधिकरणस्योत्थितिर्द्रष्टव्या । इत एव वारुचेरत्राधिकरणे वर्णकान्तरमुच्यत इति द्रष्टव्यम् । अपि शब्देनेदं सूच्यते, यथा श्रवणादि ज्ञानस्याङ्गं

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ॥ ( श्वे०उ०६-२३ )

"श्रद्धाभक्तिध्यानयोगादवेहि" इत्यादिश्रुतिप्रमाणादन्वयव्यतिरेकाभ्यां च भावनाविशेषद्वारा तस्यास्तद्धेतुत्वावगमादितिप्राप्तं-

तथा परभक्तेरपि ज्ञानस्याङ्गत्वं स्वीकर्तव्यमिति । *यस्य देवेति* । गुरौ परप्रेमास्पदभक्त्याऽर्थप्रकाशकं ज्ञानं लभ्यते यथा, तथा देवविषयकपरप्रेमास्पदभक्त्यार्थप्रकाशकं ज्ञानं लभ्यत इत्यर्थकार्यवणश्रुत्या सर्वप्रधानभूतापि भक्तिर्ज्ञानस्याङ्गं भवितुमर्हति । किञ्च "श्रद्धस्व सौम्य" इत्यनेकवारं परमात्मविषयकश्रद्धायाश्छान्दोग्ये कारणत्वश्रवणेन "श्रद्धावान् भजते यो माम्" इत्यादिना गीतायामपि परमात्मविषयकश्रद्धाया कारणत्वश्रवणेन च "श्रद्धाभक्तिध्यानयोगादवेहि" इतिवचनश्रुतश्रद्धापदस्य परमात्मविषयकश्रद्धेत्याकारकेऽर्थे निश्चिते निश्चितार्थकश्रद्धापदसाहचर्याद्भक्तिरपि तद्वचने परमात्मविषयिण्येव ग्राह्या ।

ननु परमात्मविषयकश्रद्धाभक्त्योर्ज्ञानस्याङ्गत्वश्रवणेऽपि सा भक्तिः परप्रेमास्पदरूपैव स्वीकर्तव्येत्यत्र साहचर्यं न प्रमाणं तस्यानित्यत्वादित्यत आह-*अन्वयेति* । तद्विषयकपरप्रेमास्पदभक्तिसत्वे तद्विषयकं यथार्थज्ञानं तद्विषयकपरप्रेमास्पदभक्तिरहितत्वे तद्विषयकयथार्थज्ञानाभाव एतत्स्वरूपाभ्यां लोके शतशस्तरुणयादेस्तरुणादिविषयकज्ञाने परभक्तेः कारणत्वदर्शनेन प्रसिद्धाभ्यामन्वयव्यतिरेकाभ्यां प्रकृतेऽपि तथैव कल्पयितुं योग्यमितिभावः ।

*भावनाविशेषेति* । प्रकृते भावना नाम योगाभ्यासजनितसंस्कारसजातीयो ज्ञानजनकः संस्कारविशेषः । यथा भगिन्या भ्रातृविषयकपरप्रेम्णा 'एतादृशो मे भ्राता' इत्यादिभावनया भ्रातृविषयकं निश्चितं ज्ञानं भवति । तथात्रापि परभक्तेर्भावनाद्वारा ज्ञानाङ्गत्वं स्वीकर्त-

उच्यते। तत्र गुर्वादावाहार्यधीजन्यपरभक्तेर्ज्ञानसाधनत्वकथनेन तत्समभिव्याहारात्तवङ्गदेवविषयताद्दशभक्तेरेव ज्ञानसाधनत्वस्य विवक्षितत्वात् न कैवल्यसाधनपरभक्तिर्ज्ञानस्याङ्गम्। उक्तश्रुति-युक्तिविरोधादिति भावः।

वर्णकान्तरमाह—* मुख्येति *। कैवल्यान्तरङ्गभक्तेः प्रधानत्वेऽपि फलान्तरं प्रत्यङ्गत्वमस्ति नवेति सन्देहे-नास्त्यङ्गत्वम्। उत्तमसाधनसाध्यायाः कार्यान्तरहेतुत्वायोगादिति

व्यमितिभावः। सिद्धान्तमाह—*उच्यत इति*। *आहार्येति*। अत्र भक्तिपदेन यथार्थपरभक्तिर्नैव स्वीकर्तुं शक्या। यतः परभक्तिः परमात्म-विषयिण्येवास्ति, अतो गुरौ भक्तेः परप्रेमास्पदत्वस्वीकारेऽपि न तद्यथार्थं, किन्तु बाधकालिकेच्छाजन्यरूपाहार्यबुद्धिजन्यमेवातो देवपदेन परमात्मनो भिन्नो देवः स्वीकरणीयः। तत्र ज्ञानाङ्गभक्तिर्गुरुभक्तिसाहचर्येण देवविषयकाहा-र्यधीजन्यैव ग्राह्याऽतो यथार्थपरभक्तेः कैवल्यसाधनभूताया न ज्ञानस्याङ्गत्वमिति।

ननु साहचर्यमनित्यं तथा च कथमेतत्सिद्ध्यतीतिचेन्न। साहचर्यस्यानि-त्यत्वेऽपि क्वचित्तेनार्थनिर्णयो भवत्येव। नोचेत्साहचर्यस्य प्रामाण्यकथनं ग्रन्थकाराणामसङ्गतं स्यात्।

यत्तु निश्चितार्थकपरमात्मविषयकश्रद्धापदसाहचर्याद्भक्तिरपि यथार्थपरमात्म-विषयिण्येवेत्यादिकथनं तत्तु न योग्यम्। साहचर्यात्स्वीकर्तव्यं परमात्मत्वमाहार्य-बुद्धिजन्यं देवे स्वीकृत्योपपत्तौ यथार्थपरमात्मस्वीकारे प्रमाणाभावात्। साहचर्यस्य न सम्पूर्णांशे सर्वत्र प्रामाण्यं किन्तु किञ्चिदंशे, नोचेत्साहचर्यस्यानित्यताकथन-व्यर्थत्वापत्तिरिति।

*वर्णकान्तरमिति*। अस्योत्थितावरुचिः कारणभूता पूर्वमुक्तैव। *उत्तमेति*। "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इतिस्मृतौ ज्ञानस्य पवित्रत्वं — पविवत्संसारात् त्राणकर्तृत्वं श्रुतमत उत्तमज्ञानरूपसाधन-निर्वर्त्यपरभक्तेः कैवल्यातिरिक्तलौकिकसामान्यार्थत्वादिफलसाधनत्वायोगात्। न हि सम्राट्सेवापरस्य भृत्यस्य सामान्यजनसेवापरत्वं लोके दरीदृश्यत

प्राप्ते उच्यते । ईश्वरस्य सर्वकारणत्वेनावगताया अधिकारिभेदेन कामनासहकारतः कार्यान्तरजनकत्वसम्भवात् । कैवल्यं प्रति प्रधानत्वेऽपि क्वचिद्गुणभूतत्वे न विरोधः । अत एव "आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ"(भ.गी७-१६)इत्यत्र चतुर्णामुदारत्वं ज्ञानिनां चाधिक्यं संगच्छते । यतोऽऽर्तस्यार्तिनिवृत्तिः, जिज्ञासोर्ज्ञानं, अर्थार्थिनस्त्वर्थः फलं निश्चीयते सामर्थ्यात् । ज्ञानिनस्तु फलाकाङ्क्षा

इति भावः । सिद्धान्तमाह-*ईश्वरवदिति* । लोके तथा दृष्टत्वेप्यलौकिके पदार्थे सर्वथार्थदर्शनशीलानां वचनत एव पदार्थकल्पनाया उचिततरत्वेन परमेश्वरो यथा सर्वस्यापि-महतोऽल्पस्यापि फलस्य कारणं तथा तत्परभक्तिरपि कामनायाः सत्त्वे सर्वदात्रीत्येव स्वीकरणमुचितं वचनादितिभावः ।

अत्र श्रीमद्भगवद्गीतास्थवचनेनोक्तार्थं स्थापयति-*आर्त इति* । अयं भावः । परमात्मविषयकपरभक्तिपराणां भक्तानामुदारत्वं प्रदर्श्य परभक्तिपराणां तेषामार्तत्राणत्वादिफलकामत्वप्रदर्शनं परभक्तेः कैवल्यातिरिक्तफलान्तरदातृत्व एव सङ्गच्छते नान्यथा । नचात्र गौणभक्तेः फलदातृत्वं स्वीकार्यं न परभक्तेरिति वाच्यम् । तेषामुदारत्वप्रदर्शनव्यर्थतापत्तेः । सर्वेषां भक्तानामपि तत्संभवात् । किं च "ज्ञानी त्वात्मैव मे मतम्" इत्यादिना ज्ञानिन आत्मत्वकथनं न सङ्गच्छेत । यदा च परभक्तिपरत्वेन सर्वेषामुदारत्वम्, त्रयाणामार्तादीनां फलान्तरकामनाया अपि सत्त्वेनानात्मभूतत्वं ज्ञानिनस्तु फलान्तरराहित्येन केवलकैवल्यफलकत्वेन परमात्मस्वरूपत्वेन युक्तमात्मत्वकथनम् । नो चेत् त्रयाणां गौणभक्तिपरत्वस्वीकारे ज्ञानिन उदारत्वकथनमेवोचितं न त्वात्मरूपत्वमिति ।

यां निष्कामत्वेनोकफलानामसम्भवाद्विश्वजिन्न्यायानवताराच्च सहेतुकसंसारनिवृत्तिरेव कल्प्यते। "तेषामहं समुद्धर्ता" (भ०गी० ७-१६) इत्यादिप्रमाणावतो ज्ञानिनां भक्तावेवाधिकारं वर्णयन्ति। यथा च 'भजन्ते' इत्यस्य वर्तमानापदेशत्वेऽपि विधिपरत्वं तथोत्तराधिकरण एव स्फुटीभविष्यति। (४-८)

*विश्वजिन्न्यायेति*। तन्न्यायस्वरूपं तु "विश्वजिता यजेत" "बलभिता यजेत" इत्यादिविश्वजिदादियागविधायकवाक्येषु फलानिर्देशेन विना फलनिर्देशं मनुष्यप्रवृत्तेरसंभवेनावश्यं फले कल्पयितव्ये पुत्रादिफलं न कल्प्यते। यतः पुत्रादिवतस्तत्राप्रवृत्तेरतः सर्वेषां प्रवृत्तिसिद्धये विधेरव्यर्थतायै सर्वाभिलषणीयस्वर्गफलं कल्प्यते। स्वर्गश्चात्र सुखरूप एव स्वीक्रियते। उक्तञ्च—"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्"॥ इति। स्थानविशेषरूपस्वर्गस्वीकारे तत्स्थानानिच्छुकस्य तत्राप्रवृत्त्यापत्तेः। उक्तं च जैमिनिना ऋषिणा "सः स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति। *अनवतारादिति*। मनुष्यप्रवृत्तिद्वारा विधेरव्यर्थतायै फलं कल्पनीयमत्र तु विना फलेन प्रवृत्तेर्दर्शनेन तन्न्यायप्रवृत्तौ बीजाभाव इतिभावः। *सहेतुकेति*। वासनारूपहेतुसहितेत्यर्थः। *समुद्धर्तेति*। "मृत्युसंसारसागरात्" इतिशेषः। ननु "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन" इत्यत्र 'भजन्ते' इतिपदस्य लट्प्रत्ययविशिष्टत्वेन वर्तमानकालस्य विधिशक्तिप्रतिबन्धकत्वेन कथं विधिपरत्वेन फलादिकल्पनमित्यत आह—*भजन्त इत्यस्येति*।

सूत्रार्थस्तु—देवभक्तिः-"यस्य देवे परा भक्तिः" इतिश्रुतौ देवभक्तिपदेन श्रुता, इतरस्मिन्-परमात्मभिन्नदेवे, आहार्यधीजन्या आप्नोति शेषः। अत्र हेतुमाह-साहचर्यादिति। साहचर्यात्-गुरुभक्तिसाहचर्यादिति। वर्णकान्तररीत्यार्थस्तु-देवभक्तिः-परमात्मविषयिणी परा भक्तिः, इतरस्मिन्-कैवल्यातिरिक्ताऽर्तत्राणादिफले, साधनतया स्वीकार्येति शेषः। अत्र हेतुमाह-साहचर्यादिति। साहचर्यात्-सहचरस्य भावः साहचर्यं तस्मात्-ईश्वरेण सह भक्तकर्तृकपरभक्तेर्विद्यमानत्वेनेश्वरो यथा सर्वफलानि ददाति तथा तत्सहचरिता परभक्तिरपीति।

( * त्रिसूत्रमेकमेवाधिकरणं प्रोच्यतेऽथवा ।
केवल्यहेतुर्भक्तिस्तु यतेरेवेति निश्चये ॥ ९ ॥
सूत्रसंलक्षिता भक्तिः सर्वस्यास्ति यतेर्नु वा ।
सर्वस्य सा तत्र वाक्ये चतुर्णामप्युपक्रमात् ॥१०॥
त्रयाणामल्पफलतो व्यवच्छेदाद्यतेर्मता ।
कर्म्मिणस्तदसंस्थत्वाच्चासमूत्रेषु वर्णनात् ॥ ११ ॥
अत एव मनूक्तस्य विष्णुलिङ्गस्य धारकाः ।
प्रेमभाजस्तु यतयो मुक्तिभाजो नचेतरे ) ॥ १२ ॥

( प्रकारान्तरेण तृतीयमारचयति-*त्रिसूत्रमिति* । स्पष्टम् ।

एतावत्पर्यन्तं भक्तेः स्वरूपं सर्वसाधनापेक्षयापि मोक्षं प्रत्यन्तरङ्गत्वमुक्तमधुना तस्याः साधनभेदेनाधिकारिनिर्णयोऽवश्यं कर्तव्य इत्यभिप्रायेण पूर्वोक्तं "सा मुख्या" इत्यादिसूत्राणां भङ्ग्यन्तरेणार्थान्तरं वर्णयितुमिच्छन्नत्र भङ्ग्यन्तरेण तृतीयाधिकरणं योजयितुमाह — *प्रकारान्तरेति* । *त्रिसूत्रमिति* । "सा मुख्येतरापेक्षितत्वात्" "एतेन विकल्पोऽपि प्रत्युक्तः" "देवभक्तिरितरस्मिन्साहचर्यात्" इत्यधिकरणारम्भकसूत्रत्रयमित्यर्थः । "प्रकरणात्" इत्यादिसूत्रपञ्चकस्य कथञ्चिदेतदधिकरणप्रतिपाद्यार्थबोधकत्वमेवेत्यभिप्रायः । अस्याधिकरणस्य प्रकारान्तरेण रचनाफलं दर्शितं मूले "यतेरेवेति निश्चये" इत्यनेन । तस्यायमभिप्रायः । सम्यक्तया साध्यस्य यावत्पर्यन्तं ज्ञानं न संजातं तावत्पर्यन्तं तद्विषयकं गुणादिश्रवणेनोत्पन्नमपि प्रेम कदाचिदस्थिरं भवति । यथार्थस्वरूपज्ञानानन्तरमुत्पन्नं सर्वदैवैकरूपेणैव तिष्ठति न विपरिणमते । तच्च साध्यस्य सम्यक्तया ज्ञानं वेदान्तश्रवणाध्ययनाधीनम् । तच्चोपनयनपूर्वकमापाततो वेदाध्ययनेनार्थज्ञाने जाते चतुर्थाश्रमस्वीकारे साधनचतुष्टयसम्पत्त्यनन्तरम् । एवञ्च पराभक्तावधिकारो यतेरेवेति फलतीति ।

---

* अयमेतस्य(        )चिह्नस्यान्तर्गतो भागो मुद्रणाधारभूतग्रन्थे 'इदं शोधनपत्रम्' इत्यवतरणिकया लिखितोऽस्ति । श्लोकाङ्का अपि प्रकृताङ्कप्रवाहाद्भिन्ना उपलब्धाः । अत्र स्थापिता दशाधिका ज्ञेयाः । सिद्धान्तोऽप्यत्र प्रतिपादितः प्रकृतग्रन्थकारस्य भक्तिचन्द्रिकासंज्ञकग्रन्थे नोपलभ्यते । प्रकृतग्रन्थस्याग्रिमभागेन विरुद्ध इवोपलभ्यतेचातो ग्रन्थकारस्यायं लेखोऽन्यस्य वेति विषये चेतः संदिग्धति । ग्रन्थाध्येतृणां ज्ञानार्थं यादृश उपलब्धस्तथैव कठिने स्थले टिप्पण्या संयोज्य स्थापित इति ।

*सूत्रेति* । लक्षणसूत्रे । कैवल्यहेतुरीशविषया परा भक्तिरुक्ता सा सर्वस्य वा ब्रह्मसंस्थस्य संन्यासिन एव वेति संदेहे सर्वस्य "त्रयो धर्म्मस्कन्धाः यज्ञोऽध्ययनं दानमितिप्रथमः, तप एव द्वितीयः, ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयः, अत्यन्तमात्मानमवसादयंस्त एते सर्वे पुण्यलोका भवन्ति"(छां०२-२३-१) इत्युपक्रम्य "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यत्र 'ब्रह्मसंस्थ' इति शब्दस्य मानाभावेन परिव्राजके रूढ्यभावात् तदाश्रमप्राप्तिमात्रेण मोक्षस्य "तमेव"(श्वे०३-८)इत्यादिश्रुतिविरोधेन बाधितत्वाच्च पूर्वोक्ताश्रमोपलक्षितेषु सत्कर्म्मशालिषु यस्यैव ब्रह्मणि संस्थाऽस्त्येति व्युत्पत्तिगम्यं ब्रह्मनिष्ठत्वं "सोऽमृतत्वमेति"इत्यर्थबलादितिप्राप्ते-उच्यते । "त्रयो धर्म्मस्कन्धा" इत्यत्र धर्मास्त्रित्वे व्यवस्थापयितुमाश्रमत्रयं प्रतिज्ञाय तत्र यज्ञादिलिङ्गो गृहस्थाश्रम एको धर्म्मस्कन्धो, तप इति च द्वितीयः-तपःप्रधानो वानप्रस्थाश्रमः, ब्रह्मचारीति च तृतीयः, तानेतान् पुण्यलोकफलवत्वेन व्यवच्छेद्य 'ब्रह्मसंस्थो' इत्यनेन पारिशेष्यात्परि-

---

*लक्षणसूत्र इति* । "सा परानुरक्तिरीश्वरे" इत्याकारके । अधिकरणनिर्णेयं श्रुतिं प्रदर्शयति—*त्रयो धर्मस्कन्धा इति* । स्कन्धाः—वृक्षस्य शाखावदनुष्ठेयधर्मविभागाः । यज्ञः-ज्योतिष्टोमादिः । अध्ययनं-"स्वाध्यायोऽध्येतव्यः" इतिश्रुत्या विहितम् । दानं-बहिर्वेदिषु दत्तम् । *प्रथम इति* । प्रथमशब्देन न ब्रह्मचर्याश्रमस्य ग्रहणं किन्तु यज्ञादिलिङ्गेन गृहस्थाश्रमस्य । एवञ्च श्रुतौ न प्रथमादिशब्दाः क्रमविशिष्टसङ्ख्येयबोधकाः किन्तु विभागप्रदर्शका इतिबोध्यम् । *तमेवेति* । सम्पूर्णश्रुतिस्वरूपं "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति । *तपः प्रधान इति* । तस्मिन्नाश्रमे सत्स्वपि कर्मसु तपस एव प्राधान्यम् । *ब्रह्मचारीति* । "ब्रह्मचार्य्याचार्यकुलवासी" इत्यनेन स्पष्टमेव ब्रह्मचर्याश्रमो बोध्यते ।

त्त्राडिति गम्यते। ब्रह्मपरतया सर्वैषणापरित्यागलक्षणब्रह्मसंस्थात्वस्यान्यत्रासम्भवात्। ब्रह्मसाक्षात्काराङ्गतया पारिव्राज्यस्य विवक्षितत्वात्परिव्राडेव साधनचतुष्टयसम्पन्नो ब्रह्मज्ञानसम्पन्नः प्रेमभाग् मोक्षभागितिगम्यते। तृतीध्यायचतुर्थे "अनुष्ठेयं बादरायणः सम्भवात्" (३-४-१६) इत्यादिबादरायणीयसूत्रैस्तथैव प्रतिपादनाच्च। न च भिक्षुवद्ब्रह्मार्पणेन कर्म्म कुर्वतां गृहस्थादीनामपि ब्रह्मनिष्ठत्वे बाधकाभावः। "परीक्ष्य कर्म्मचितान्लोकान्ब्राह्मणो निर्वेदमायात्" ( मु०१-२-१२ ) इत्यादिना विधितः सकलत्यागेन ब्रह्मनिष्ठत्वविवक्षितत्वात्।

उपसंहरति-*अत एवेति*। *मनूक्तस्य*।

"मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम्।

---

*सर्वैषणेति*। पुत्रैषणा–वित्तैषणा–लोकैषणेत्यादयः। *तथैव प्रतिपादनादिति*। तत्र आश्रमत्रयापेक्षाभिक्षमनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते। साम्यश्रुतेः-समा हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते "त्रयो धर्मस्कन्धा" इत्याद्या। यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टं, एवमाश्रमान्तरमपीति प्रतिपत्तव्यम्। तस्मात्तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य। तथा "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यस्य वेदानुवचनादिभिः समभिव्याहारः "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यस्य च पञ्चाग्निविद्ययेति बोधितम्।

यतेरिव विशेषफलराहित्येन केवलं ब्रह्मार्पणबुद्ध्या कर्मकारिणां ब्रह्मचर्याद्याश्रमिणां फलमस्त्विति शङ्कां निवारयति—*न च भिक्षुवदिति*। *कर्मचितामिति*। कर्मसम्पादितानित्यर्थः। *निर्वेदमिति*। वैराग्यमित्यर्थः। *अत एवेति*। यतेरेवाधिकारसिद्धेरित्यर्थः। *मुखजानामिति*। ब्राह्मणानामित्यर्थः। "ब्राह्मणोऽस्य मुखमासीत्" इतिश्रुतेः। अत्र मुखशब्दस्य मुखजत्वादौ लक्षणा। *लिङ्गधारणमिति*। विष्णो-

बाहुजातोरुजातानां नायं धर्म्मः प्रशस्यते" ॥

इत्यादिना विष्णुलिङ्गस्य ये धारका यतयः, योग्यतया वैष्णवशब्दव्यपदेश्यास्त एव श्रुतिस्मृत्याद्युक्तसाधनसम्पन्नाः प्रेमभाजोऽमृतभाजश्च नेतरे काल्पनिकलिङ्गधारिणो वैष्णवशैवशाक्ताद्यभिमानिनः । एतेन "श्वादोऽपि सद्यः सवनाय कल्पते" (श्रीमद्भा०) इत्यादिकमपि व्याख्यातम् । श्वाद इव श्वादः आश्रमपरिभ्रष्टः, सवनाय-"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" ( बृ० ४-४-२२ ) इत्याद्युक्तयज्ञफलाय-ज्ञानाय योग्यो भवति "उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम्" ( ब्र० सू० ३-४-४२ ) इत्यादिना वेदान्ते भगवता बादरायणेनाश्रमपरिभ्रष्टानां तेषामेव प्रायश्चित्तेन ज्ञानाधिकारसूचनात् । सर्वेषामेव योग्यत्वे तु तेषामेव तत्समर्थनं न स्यादित्यास्तां विस्तरः । "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्" (भ०गी०९-३२) इतिभगवद्वाक्यं तु साधनभक्त्या कालेन मोक्षाभिप्रायकम् । यथा चैतत्तथाग्रे वक्ष्यामः । ( ९--१२ )

---

लिङ्गरूपः सन्न्यास इति यावत् । *बाहुजातोरुजातानामिति* । क्षत्रियवैश्यानामित्यर्थः । "बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः" । इतिश्रुतेः । वस्तुतस्तु नेदं वचनं मनुस्मृतावुपलभ्यते । किन्त्वन्यत्र "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः" । इति बौधायनोक्तिरूपेणोपलभ्यत इति ।

ननु पुराणादिषु चाण्डालादिकानामपि यज्ञफलज्ञानादिकमस्तीति ज्ञायतेऽतो यतेरेव भक्तेरधिकारस्थापनं नोचितमित्यत आह—*एतेन श्वादोऽपीति* । *सूचनादिति* । तत्र हि यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत किं तस्य प्रायश्चित्ताचरणपूर्वकं शुद्धिरस्ति न वेति शङ्कायां "नचाधिकारिकमपि पतनानुमानात्तदयोगात्" इत्यादिना पूर्वपक्षसूत्रेण प्रायश्चित्ताभावं प्रतिपाद्य "उपपूर्वमपि" इत्यादिप्रकृतसूत्रेण तदुपपातकत्वेन स्वीकृत्यैकेषां मतेन तत्र प्रायश्चित्तमुक्तम् ।

भक्तिः प्रमेया श्रुतिभ्यः । १ । २ । ९

( पुराणेतिहासाभ्याश्चेति । १ । २ । १० )

( पृथुध्रुवप्रह्लादाम्बरीषशुकसनकनारद-

भजनाचाराच्च । १ । २ । ११ )

श्रुतिसिद्धा न वा भक्तिर्न श्रुता मोक्षसाधनम् ।

ज्ञानात्परं न संप्रोक्तं न भक्तेः श्रुतिसिद्धता ॥ ९ ॥

नमन्त्यत्र भजन्तेऽत्र लटो लेट्त्वप्रकल्पनात् ।

मोक्षहेतुतया भक्तिर्विहिताचारतोऽपि च ॥ १० ॥

चतुर्थमारचयति-❋श्रुतिसिद्धेति❋। भक्तिः श्रुतिसिद्धा नवेति सन्देहे-न सिद्धा।"आत्मा वा अरे द्रष्टव्यः"। (बृ०उ०२-४-५)

---

"ब्रह्मसंस्थोऽमृतत्वमेति" इत्यादिश्रुतिश्रुतसंस्थापदेनान्यविषयव्यावृत्त-ब्रह्ममात्रस्थिताऽन्तःकरणस्य वृत्तिरूपा भक्तिर्यद्यपि प्रतिपादिता तथाप्यनुवादस्वरूपेण श्रुतायास्तस्या वैदिकविधिविधेयत्वसिद्धिं विना "आत्मा वा अरे द्रष्टव्यः" इत्यादिश्रुतिविहितस्य मोक्षसाधनभूतज्ञानस्य भक्त्यङ्गत्वं तद्द्वारा च मोक्षसाधनत्वं वर्णयितुमशक्यमित्यतो भक्तेर्वेदविहितत्वस्थापनार्थं चतुर्थाधिकरणं योजयति—❋श्रुतिसिद्धेति❋ । विधेयतया श्रुतिसिद्धेत्यर्थः ।

इत्यादौ दर्शनस्यैव मोक्षसाधनतया भक्तेः कर्तव्यत्वाश्रवणादिति प्राप्ते–उच्यते।

"यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च"

"तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन। आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे"॥ (ऋ० २-२-२६)

*दर्शनस्यैवेति*। यथा "आत्मा वा अरे" इत्यनेन दर्शनं साक्षान्मोक्षसाधनतया विधीयते तथा कयापि श्रुत्या भक्तेः साक्षान्मोक्षसाधनत्वविधानाभावेन पूर्वाधिकरणैः स्थापितमपि भक्तेर्मोक्षसाधनत्वं न सम्यगित्यभिमानः।

वेदानां विधेयार्थबोधनस्यानेकप्रकारत्वेनास्माभिरकिञ्चिज्ज्ञैर्विधेयतयानवबुद्ध्येऽप्यर्थे पूर्वमीमांसा यदि विधयत्वेन कंचनार्थं साधयति तदावश्यं सोऽर्थो विहित इत्येव स्वीकर्तव्यमित्यभिप्रायेण सिद्धान्तमाह—*उच्यत इति*। *यं सर्वे देवा इति*। मुमुक्षवः—मोक्तुमिच्छवः, ब्रह्मवादिनः ब्रह्मप्रवक्तारो मुक्ता इत्यर्थः। अथ च देवाः—ब्रह्मप्रभृतयः, यं–परमात्मानं, प्रणमन्ति प्रेमास्पदत्वेन नमस्कुर्वन्तीत्यर्थः। "आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः"॥ इत्यादिपुराणवचनसहकृतपूर्वोक्तया श्रुत्या ब्रह्मवादिनां मुमुक्षूणामपि प्रेमास्पदत्वेन नमस्कारकरणरूपार्थस्यापूर्वस्य बोधनमस्मिन्वचनेऽस्ति। उपनिषद्रूपब्राह्मणवचनं प्रदर्श्य मन्त्ररूपश्रुतिवचनं प्रदर्शयति–*तमु स्तोतार इति*।

ननु 'भजामहे' इति मन्त्रगतस्योत्तमपुरुषयुक्तपदस्य विधेयत्वं न संभवति। यतो विधिशक्तेः प्रतिबन्धकेषूत्तमपुरुषस्य परिगणितत्वात्। उक्तञ्च–"येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात्। विधिशक्तिः प्रणश्येत्तु ते सर्वेऽत्राभिधायकाः" ॥ 'यच्छब्दाद्युपबन्धनात्' इत्यत्रादिशब्देनोत्तमपुरुषादेरपि ग्रहणम्। श्रीमता जैमिनिनापि–"अपि वा प्रयोगसामर्थ्यान्म-

इत्यादौ श्रुतौ "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन" (भ०गी० ७-१६) इत्यादौ स्मृतौ चापूर्वार्थत्वात्, "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" (तै०सं०५-३-१२) "अग्निहोत्रं जुहोति" (तै० सं० १-५-६) इत्यादाविवापूर्वार्थत्वाल्लटो लेट्त्वप्रकल्पनेन न्योऽभिधानवाची स्यात्" इति च। इत्यत आह—*चतुर्विधा भजन्त इति*। एवं च स्मृतावपूर्वार्थबोधकत्वस्य विद्यमानत्वेन तद्विहितार्थानुवादके "तमु स्तोतार" इतिवैदिकवचन उत्तमपुरुषत्वेऽपि विधेयबोधकत्वकल्पने न कापि हानिः। उत्तमपुरुषादीनां विधिशक्तिप्रतिबन्धकत्वं तत्र कल्प्यते यत्र कथमप्यन्यवचनैर्विहितत्वं न बोध्यत इति भावः। ननु तत्रैव विधेयत्वं कल्पनीयं यत्र लिङ्लोट्लेटतव्यप्रत्ययविशिष्टत्वमस्ति। प्रदर्शितवचनेषु तेषामन्यतमस्याभावात्कथं विधेयत्वमितिशङ्कावारणार्थमाह *तरतीति*। अयमभिप्रायः। अश्वमेधयागो ब्रह्महत्यातरणकारणमित्यादिके सामान्यतो वाक्यार्थेऽवगते पूर्वमेतादृशवाक्यार्थस्याज्ञानाद् वेदानामितरप्रमाणापेक्षारहितानां प्रमाणमूर्धन्यभूतानां सर्वथा प्रमाणत्वेन "तरति ब्रह्महत्याम्" इत्यादिवाक्यजन्यार्थेऽप्रमाण्यकल्पनाया अयोग्यत्वेनापूर्वार्थस्य विधेयत्वावश्यकत्वेन तद्बोधकलङ्घटितस्य 'भजत' इत्यस्य विधेयबोधकत्वार्थं लटो लेट्त्वकल्पनमावश्यकम्। वस्तुतो 'भजामहे' 'नमन्ति' इत्यादयो लेडन्ता एव प्रयोगाः। "सिब्बहुलं लेटि" "इतश्च लोपः परस्मैपदेषु" इत्यनयोर्विध्योर्बाहुल्येन वैकल्पिकत्वेन च "आत ऐ" इत्यस्य च छान्दसत्वेन "छन्दसि बहुलम्" इत्यनेन तस्यासार्वत्रिकत्वबोधनात्। एवञ्च 'भजामहे' 'नमन्ति' इत्यस्य लट्प्रयोगसदृशत्वेन भ्रमेण येयं लडिति बुद्धिस्तस्या परिवर्तनम्। यथा "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यत्र बुद्धिविपरिणामस्तथेति भावः।

नन्वपूर्वार्थत्वेऽपि विधेयत्वं तदैव कल्पयितुं शक्यते यदार्थवादत्वाभावः सिद्ध्येत्। स च लोके प्रसिद्धेन केनचित्पुरुषधौरेयेणैकौ तस्याचरितत्वेन सिद्धफलकत्वे वा सिद्ध्यति। न चेदर्थ-

'नमेयुः' इत्यादिविधिस्वीकारात्, ध्रुवाद्याचाराच्च मोक्षसाधनतया कर्तव्यत्वेन श्रुतिप्रसिद्धैव भक्तिः। श्रुतेरयमर्थः। तं—प्रसिद्धं, उ-इत्यनर्थको निपातः, स्तोतारः-स्तुध्वं, पूर्व्यं-जगत्कारणं, यथा विद-

वावत्वं स्यात्तत आह—*ध्रुवाद्याचाराच्चेति*। उत्तानपादपुत्रेण नमनादि-गौणभक्त्यनुष्ठानेन यत्परप्रेमास्पदस्वरूपलाभेन सुखं लब्धं तत्स्वमुखेन श्रीमद्भागवते तेन प्रगटीकृतम्। "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्। सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किं त्वन्तकासिलुलितात्पततां विमानात्"॥ इत्यादिवचनजातेन। आदिपदेन प्रह्लादशुकादीनां ग्रहणम्। प्रह्लादवचनं यथा—"यस्मात्प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः। दुःखौषधं तदपि दुःखमतद्धियाहं भूमन् भ्रमामि वद मे तव दास्ययोगम्"॥ इति। तथा शुकस्य वर्णनपरं सूतवाक्यम्-"इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारिताऽनन्तहताखिलेन्द्रियः। कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तमम्"॥ इति।

एवञ्च यथा "आत्मा वा अरे द्रष्टव्यः" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इतिविहितत्वं ज्ञानस्य ज्योतिष्टोमस्य कर्मणश्च तथैव 'नमन्ति' 'भजामहे' इत्यादिप्रयोगाणां विधायकलेडन्तत्वेन तद्बोध्यभक्तेर्मोक्षसाधनतया श्रुतिप्रसिद्धमेव विधेयत्वमित्यभिप्रायेणाह—*मोक्षसाधनतयेत्यादि*। प्रकृतसिद्धान्तोपपत्त्यर्थं श्रुतेरर्थं प्रदर्शयति—*श्रुतेरयमर्थ इति*। * तं प्रसिद्धमिति*। देवमित्यर्थः। *अनर्थक इति*। इह तस्योपादानं छन्दःपूरणार्थमितिभावः। * स्तुध्वमिति*। 'स्तोतारः' इत्यस्य लोण्मध्यमपुरुषबहुवचनान्तेन विपरिणामोऽर्थानुसारात्। छन्दसि सर्वविधीनां वैकल्पिकत्वात्। * जगत्कारणमिति*। फलितार्थकथनमेतत्। 'पूर्व्यम्' इत्यस्य पुरातनमित्येव विवरणम्। पूर्व्यमितिविशेषणेन सर्वतः पुरातनमपेक्षितम्, तच्च यत्सर्वतः पुरातनं तन्नूतनोत्पन्नजगतः कारणरूपमेव फलति। "यतो वा इमानि भूतानि जायन्ते" "तस्मात्परब्रह्मणः

गुणानामानन्त्येऽपि मतिपरिणामावधीत्यर्थः । ऋतस्य-वेदान्तवाक्य-स्य, गर्भं-प्रतिपाद्यम्, स्तुतेः फलमाह—जनुषा पिपर्तनेति—जन्म पूर्यताम्, करणत्वनिर्देशश्छान्दसः । स्तुत्यभावे-अस्य-परमात्मनो नाम चित्-नामापि, विवक्तन-वदतेति-साधनं वदतेति साधनभक्तिमाहुः

सकाशान्महान्" इत्यादिश्रुतेः । ※मतिपरिणामावधीति※ । इदमपि फलितार्थ-कथनम् । 'यथा विद' इत्यस्य यथाजानीथेत्ययमेवार्थः । परमात्मनोऽनन्त-गुणकत्वेनाल्पज्ञाः स्तवनकर्तारो यूयं स्वीयकिञ्चिद्गुणज्ञानानुसारं तं स्तुध्वम् । नास्ति स्तवने कश्चिन्नियम इति भावः । महिम्नस्तोत्रेऽप्युक्तम्—"अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्" इति ।

※वेदान्तवाक्यस्येति※ । उपनिषद्रूपस्येत्यर्थः ※प्रतिपाद्यमिति※ । "तन्त्वौपनिषदं पुरुषं पृच्छामि" इतिश्रुतेः । ※छान्दस इति※ । जन्मपूर्यतामितिकर्मकर्तृप्रयोगे कर्तव्ये 'जनुषा' इतिकरणनिर्देशश्छान्दस इत्यर्थः । तथा 'पिपर्तन' इत्यत्र तनबादेशोऽपि । जन्मनः पूर्तिं प्राप्तुं जन्मानि समापयतेतिभावः । ※ नामा-पीति※ । 'नामचिद्' इत्यत्र 'चिद्' शब्दोऽप्यर्थकः । "चिदित्येषानेककर्मा" इतिनिरुक्तात् । "सद्यश्चिद्यः शवसा पञ्चकृष्टीः" इतिऋग्मन्त्रे तथैव दृष्टत्वाच्च । ※विविक्तनेति※ । अत्रापि तनबादेशश्छान्दसः । नामोच्चारणश्रवणयोः "नामान्य-नन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः" इत्यादिना "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्" इत्यादिना च साधनभक्त्यन्तर्गत-त्वेनायं श्रुतिवचनांशः साधनभक्तिबोधक इत्यभिप्रायेणाह—※साधनं वदतेति※ ।

श्रुतयः । वयं, ते-तव महः-तेजो भर्गाख्यं, भजामहे-त्वत्स्वरूपविषयां प्रेमभक्तिं कुर्म इति । (६-१०)

---

*वयमिति* । साधनभक्तिपराः परप्रेमस्वरूपफलभक्त्यर्थं भजन्तु वा मा, स्वरूपज्ञा वयं तु, *भर्गाख्यमिति* । भजामह एवेतिसंबन्धः भाभिः-रश्मिभिर्गच्छति-यावाविधं रामकृष्णादिरूपं प्राप्नोतीत्याकारकम् । कुर्मेति-भजानुमहकारकोभक्तुरिच्छुत्तमित्यप्यत्र व्याख्याने बोध्यम् । 'भजामहे'त्रापि 'भजेमहि' इतिविपरिणामो बोध्यः ।

अस्मिन्मन्त्रे 'तमु स्तोतार' इत्युपक्रमेण 'भजामहे' इत्युपसंहारेण च सर्वविधाऽपि भक्तिरनेन मन्त्रेण विहितेति ज्ञेयम् । न च मन्त्रस्यार्थप्रकाशकत्वेन विधायकत्वाभावः । एकस्योभयकार्यकर्तृत्वासम्भवादिति वाच्यम् । "मात्राश्च सिद्धाः पितरश्च प्रीणीताः" इत्यादिकुभयकार्यकर्तृत्वमप्येकस्य दरीदृश्यते । किञ्च यथा "वसन्ताय कपिञ्जलानालभते" इतिमन्त्रे विधायकत्वं स्वीकृतम्, तथात्रार्थस्मारकत्वेऽपि विधायकत्वकल्पने दोषाभावः । उक्तञ्च तन्त्र-वार्तिके-"विधिशक्तिर्न मन्त्रस्य नियोगेनापनीयते । यतो विधास्यति ह्येष नियोगात्स्मारयिष्यति" ॥ इति । एवमन्येऽपि मन्त्राः "विचक्रमे पृथिवीमेष एताम्" "यस्य त्री पूर्णा मधुना पदानि" "न मर्तो दयते सनिष्यन्" त्रिर्देवः पृथिवीमेष एताम्" "तदस्य प्रियमभिपाथो अश्याम्" "यो मध्यायं विदधाति पूर्व्यम्" इत्यादयः क्रमेण स्मरणकीर्तन-पादसेवन-दानपूजन-दास्य-चरणोदक-सेवन-भगवदेकतरवार्ताबोधका द्रष्टव्याः ।

अस्मिन्नधिकरणे सूत्रत्रयम् । इदं सूत्रत्रयं स्वप्नेश्वरभाष्ये तदनुसारि-भवदेवभाष्ये च न स्वीकृतम् । क्रमेण सूत्राणामर्थः-भक्तिः प्रमेयेति । भक्तिः साधनसाध्यरूपा, श्रुतिभ्यः "तमु स्तोतारः" इत्यादिवेदवचनेभ्यः, प्रमेया-विवेचनया प्रमातुं योग्येति ।

## योगस्तूभयार्थमपेक्षणात्प्रयाजादिवत् । १ । २ । १२

## ( गौण्या तु समाधिसिद्धिः । १ । २ । १३ )

भक्तिहेतुर्नवा योगो ज्ञाने तद्विनियोगतः ।
क्वचिच्च भक्तिसाध्यत्वाच्च योगो भक्तिसाधनम् ॥११॥
ज्ञानभक्त्युभयार्थत्वं चित्तैकाग्र्यस्य साधने ।
योगे स्फुटं प्रयाजादौ काम्यनित्योभयार्थवत् ॥ १२ ॥

पञ्चममारचयति-*भक्तीति* । योगो भक्तिसाधनं नवेति सन्देहे-न भवति । "निदिध्यासितव्यः"(बृ०उ०२-४-५)इत्यादिना ज्ञाने

---

पुराणेतिहासाभ्यामन्वेतीति । अत्र पूर्वसूत्राद् 'भक्तिः प्रमेया' इति पदद्वयमनुवर्तते । पुराणं श्रीमद्भागवतादिकम् । इतिहासः-महाभारतादिः । ताभ्यामपि भक्तिः प्रमेयेति ज्ञायते । वेदार्थस्य सूक्ष्मत्वेनानिश्चयेऽपि निश्चितार्थकपुराणेतिहासाभ्यां तदर्थनिर्णयो भवतीति भावः । तथा च भागवते-"तस्मादेकेन मनसा भगवान् सात्वतां पतिः । श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा" ॥ इति । महाभारते "क्रियतां मद्वचः शिष्याः सेव्यतां हरीश्वरः । गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि" ॥ इति ।

पृथुध्रुवप्रह्लादेति । अत्रापि 'भक्तिः प्रमेया' इतिपदद्वयानुवृत्तिः । पृथुध्रुवादिशिष्टानां भजनविषयकाचारादपि भक्तिः प्रमेयेति ज्ञायत इत्यर्थः ।

ज्ञानस्य भक्त्यङ्गत्वे सिद्धान्तिते भक्त्यङ्गस्यापि योगस्य ज्ञानाङ्गत्वस्थापनार्थं शङ्कानिवारणपूर्वकभक्तेरितरापेक्षितत्वस्य पुनस्थापनार्थं च पञ्चमाधिकरणं योजयितुमाह-* योगो भक्तीति* । ननु योगस्य ज्ञानाङ्गत्वे किं प्रमाणमित्यत आह — *निदिध्यासितव्य इति* । "आत्मा वा अरे द्रष्टव्यः"

विनियुक्तस्यान्यत्र विनियोगायोगात्। क्वचिद्भक्तिसाध्यत्वावगमाच्च। इत्थं चेतरापेक्षितत्वमसिद्धमिति प्राप्ते—उच्यते। सामान्यतोऽवगतस्य प्रयाजादेः काम्यनित्योभयसाधनत्वमिव चित्तैकाग्र्यसाधनतया सामान्यतोऽवगतस्य योगस्य गौणभक्तिसाध्यत्वेऽपि ज्ञानभक्त्युभयार्थत्वमदुष्टम्। इत्थं च भक्तेरितरापेक्षितत्वमबाधम्। ( ११-१२ )।

इतिश्रुतावात्मज्ञानं प्रति श्रवणादि साधनतया विधीयते। तत्र निदिध्यासनपदेनाष्टाङ्गयोगो बोधित इति भावः। ननु ज्ञानाङ्गस्यापि योगस्य भक्त्यङ्गत्वस्वीकारे को दोष इत्यत आह—※ ज्ञाने विनियुक्तस्येति※। ननु लोकेऽन्यत्र विनियुक्तस्यापि तन्निष्ठकार्यकर्तृत्वं दृश्यते। यथा राजभृत्यो राजकार्यार्थं गच्छन् मार्गमध्ये स्वसम्बन्धिनोऽपि कार्यं करोति तथात्र ज्ञानाङ्गोऽपि योगो भक्त्यङ्गो भवत्वित्यत आह—※क्वचिद्भक्तेति ※। "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्"॥ इति श्रीमद्भागवतश्लोके योगाङ्गतया श्रुताया भक्तेर्योगसाध्यत्वेन वर्णनमसङ्गतं स्यादिति भावः। एवञ्च पूर्वोक्तं भक्तेर्योगादिभिरपेक्षितत्वं बाधितमित्याह—※इत्थं चेतरेति※।※काम्यनित्योभयेति※। यथा प्रयाजो वाजपेयादेरङ्गं भवन् तदङ्गदीक्षणीयादेरप्यङ्गम्, तद्वदङ्गत्वबोधकप्रमाणविशेषात्केवलं ज्ञानार्थं योगानुष्ठानं प्रसङ्गेन भक्तिमप्युपकरोतीतिभावः। ※ चित्तैकाग्र्येति ※। ध्यातृध्यानध्येयरूपत्रिपुटीलयरूपस्यासंप्रज्ञातादिसमाधेरित्यर्थः। तत्र साधनतयावगतस्यासनप्राणायामादेर्योगस्य "ईश्वरप्रणिधानाद्वा" इत्यनेन योगसूत्रेण गौणभक्तिसाध्यत्वबोधनेऽपि तस्य ज्ञानस्य परमभक्तेश्च साधनत्वस्वीकारे न दोष इति भावः। यद्यपि भक्तिर्माहात्म्यज्ञानमात्रेणैव संभवति, सा समाहितमनस्कत्वमपि नापेक्षते तथापि सा तेन दृढीभवतीतिबोध्यम्

सूत्रार्थस्तु—योगः-अष्टाङ्गयोगः 'तु' शब्दो ज्ञानं केवलं भक्तेः साधनं योगस्तूभयस्येति ज्ञानाद्वैलक्षण्यबोधकः। उभयार्थम्-ज्ञानार्थं भक्त्यर्थं चेति, अपेक्षत्वात्-उभाभ्यामपेक्षितत्वात्, प्रयाजवत्-यथा प्रयाजो वाजपेयाङ्गं भवंस्तदङ्गदीक्षणीयादेरप्यङ्गं तद्वत्।

हेया रागत्वादितिचेन्नोत्तमास्पदत्वात्

सङ्गवत् । १ । २ । १४

भक्तिर्हेया न वा जीवन्मुक्तैर्हेयैव रागिणः ।
क्लेशानुवृत्तेर्दृष्टत्वाद्रागभक्त्योः समार्थतः ॥ १३ ॥
रागो भवानुबन्धीयो हेयो मोक्षगुणो न हि ।
सत्संगवदुपादेयो राग ईश्वरसंश्रयः ॥ १४ ॥

पद्यमारचयति-*भक्तिरिति* । भक्तिर्जीवन्मुक्तैर्हेया न वेति सन्देहे-क्लेशात्मकरागरूपत्वाद्धेयेति प्राप्ते-उच्यते । न हेया । भवानुब-

---

गौण्या तु समाधिसिद्धिरिति । इदं केभ्यश्चित्पदेभ्य उत्तरं सूत्रम् । ननु "ईश्वरप्रणिधानाद्वा" इति सूत्रेण पतञ्जलिना प्रणिधानाभिधेयस्य भगवद्भजनस्य योगसाधनत्वमुक्तं, ततः कथं योगस्य भक्त्यङ्गत्वमित्यत आह-गौण्येति । गौण्या-गौणभक्त्या, समाधिसिद्धिः-संप्रज्ञातादिः समाधिः सिद्ध्यतीति । एवञ्च तस्य परभक्त्यङ्गत्वस्वीकारे न दोषः ।

योगशास्त्रीयविचारप्रसङ्गेन तच्छास्त्रे रागस्य हेयक्लेशमध्यपरिगणितत्वेन भक्ते रागरूपत्वस्यात्रोक्ततया हेयत्वमेवेति शङ्कानिवारणार्थं पद्याधिकरणस्य योजनेत्यभिप्रायेणाह —*भक्तिरिति* । *जीवन्मुक्तैरिति* । "न तस्य प्राणा उत्क्रामन्ति, अत्रैव समवलीयन्ते" "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" "विमुक्तश्च विमुच्यते" इत्यादिश्रुतिलक्ष्यभूतैरखिलबन्धरहितत्वविशिष्टब्रह्मनिष्ठत्वलक्षणकैरित्यर्थः । *क्लेशात्मकरागेति* । "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति-

भवरागस्यैव क्लेशात्मकतया हेयत्वेन मोक्षानुगुणत्वस्य तस्य सत्सङ्गव-
द्धेयत्वात्। रागत्वादिना हेयत्वानुमाने भवानुबन्धित्वस्योपाधि-
त्वात्। वस्तुतो भक्तौ प्रीयामीति प्रतीतिसिद्धानुरागत्वाभ्युपगमेऽ-
पि रज्यामीति प्रतीतिविषयेऽनुरागत्वजात्यनभ्युपगमात्स्वरूपा-
सिद्धिरेवेति रहस्यम्। (१३-१४)

पतञ्जलिना क्लेशेषु रागस्य परिगणितत्वादिति भावः। *भवानुबन्धीति*।
संसारसम्बन्धिनो रागस्यैव क्लेशरूपत्वेन त्याज्यत्वमित्यर्थः। *मोक्षानुगुणेति*।
मोक्षसाधकत्वेत्यर्थः। *सत्सङ्गवदिति*। "सङ्गः सर्वात्मना त्याज्यः" "सङ्गं
त्यक्त्वा सुखी भवेत्" इत्यादिना सङ्गस्य सर्वथा त्याज्यत्वबोधनेऽपि भवानुबन्धि-
सङ्गस्यैव त्याज्यत्वं स्वीक्रियते न तु मोक्षसाधकस्य सत्सङ्गस्य, यतः "स एव
साधुषु कृतः स्वर्गद्वारमपावृतम्" इत्यनेन तस्य कर्तव्यत्वबोधनात्। एवञ्च
तद्वद्रागरूपत्वा अपि भक्तेर्न त्याज्यत्वमितिभावः।

*हेयत्वानुमान इति*। ईश्वरविषयकरागो हेयो रागत्वात्पुत्रादिविषयक-
रागवदित्याकारक इत्यर्थः। *उपाधित्वादिति*। साध्यव्यापकत्वे सति साध-
नाव्यापकत्वरूपस्य तस्य प्रकृते हेयत्वरूपसाध्यव्यापकत्वेनेश्वरविषयकरागे रागरूप-
साधनस्याव्यापकत्वेन प्रकृते रागरूपहेतोः सोपाधिकत्वेन व्याप्यत्वासिद्धिरूपहेत्वा-
भासत्वेनास्यानुमानस्यायोग्यत्वादितिभावः। प्रथमोपस्थितपक्षनिमित्तकहेत्वाभास-
दोषदानं परित्यज्य पश्चादुपस्थितहेतुनिमित्तकदोषप्रदर्शनमनुचितमित्यभिप्रायेण
पक्षनिमित्तकदोषं पक्षे हेत्वभावरूपं स्वरूपासिद्धिं प्रदर्शयितुमाह—*वस्तुत-
इति*। *प्रीयामीति*। अनुरागशब्दस्य रागेत्याकारकानुपूर्वीघटितत्वेऽपि द्वयोः
प्रतीतिभेदेन भिन्नार्थकत्वेन भिन्नजातिकत्वं नत्वेकजातिकत्वम्, किंशुकशुकशब्दवत्।
यथा किंशुकशब्दस्य शुकेत्याकारकानुपूर्वीघटितत्वेऽपि तत्र किंशुकशब्दस्य
प्रवृत्तिनिमित्तं वृक्षविशेषत्वम्। शुकस्य च पक्षिविशेषत्वम्। एवं च तयोर्भिन्नार्थकत्वेन
भिन्नजातिकत्वं तद्वदित्यर्थः। *स्वरूपासिद्धिरिति*। एवञ्च तावत्क्लेशमध्य-
परिगणितरागवृत्तिरागत्वजात्यपेक्षातोऽनुरागत्वजातेर्भिन्नत्वेनेश्वरविषयकानुरागे –
तारत्वजात्यभावेन स्वरूपासिद्धिरेव, शब्दे चाक्षुषत्ववदितिभावः।

## तदेव कर्मिज्ञानियोगिभ्य-
## आधिक्यशब्दात्। १। २। १५

## ( प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः। १। २ ।१६ )

अर्थाद्यर्थं भजनवदन्यदप्यस्ति वा न वा।

अस्त्येव तत्तत्कामानां तत्तत्कर्मोपदेशतः॥ १५॥

नार्थाद्यर्थं किमप्यन्यत्किन्त्वीशप्रीतिहेतुकम्।

प्रीत्या तदन्यथासिद्धं प्रीत्यैव फलसंभवात्॥ १६॥

सत्समारचयति-*अर्थेति*। भजनवदन्यदप्यर्थाद्यर्थसाधन-तया विहितं नवेति सन्देहे-विहितम्। पशुस्वर्गादिकामानां "चित्रया यजेत पशुकामः" ( तै० सं० २-४-६ ) "स्वर्गकामो ज्योतिष्टोमेन यजेत" ( तै० ब्रा० ) इत्यादिना पश्वादिफलोद्देशेन चित्रादियागोपदेशात्।

सूत्रार्थस्तु-द्वेषा-अत्र भक्तिपदस्याध्याहारः। भक्तिस्त्याज्या, रागत्वात्-रागरूपक्लेशविशेषत्वात्, 'इति'पदं पूर्वपक्षानुस्मरणद्योतनार्थम्, चेत्-यदि, न-नैवत्याज्यमितियावत्। उत्तमास्पदत्वात्-उत्तमपरमेश्वररूपाश्रयकत्वात्। सत्सङ्गवत्-यथा सतां सङ्गे न द्वेषः किन्त्वसत्सङ्ग एव। तथा संसारानुगुणो रागो हेयो, न मोक्षानुगुण इतियावत्।

भक्तेः सर्वफलप्रदातृत्वस्थापनार्थं सत्समाधिक्यं बोधयितुमाह-*भजनवदिति* *धर्माद्यर्थेति*। द्रव्यपशुपुत्रादिरूपानेकफलेत्यर्थः।

वेदप्रामाण्यं चाप्रतिहतम्। तस्माच्च भक्तिरेव सर्वार्थसाधनमिति प्राप्ते-उच्यते। नेतरदर्थसाधनतया विहितम्। अदृष्टे मानाभावात्।

प्रीत्यनुकूलव्यापारस्य यागादेः प्रीतिजनकत्वेनान्यथासिद्धेः। न च स्वजन्यप्रीतिसम्बन्धेन कारणता। तदपेक्षयाश्रयत्वविषयत्वान्यतरसम्बन्धेन प्रीतित्वेनैव हेतुताया उचितत्वात्। "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा" (भा० गी० ११-२०-३३) इत्यादिमानाद्भक्तेरेव जनकत्वमुचितमित्यभिप्रेत्य "श्रद्धावान् भजते यो माम्" (भ०गी०-६-४७) इत्यादिभजनाधिक्यबोधकप्रमाणाद्भक्ते साधनतयैव विहि-

---

*वेदप्रामाण्यमिति* । वेदस्यैकरूपेणैव सर्वत्र प्रामाण्यादित्यर्थः । अयमभिप्रायः । न च "यमेवैष वृणुते तेन लभ्यः" इत्यादिना भक्तिरेव वेदेन बोधिता, यद्यपि चित्रादियागानां वेदेन बोधितत्वेऽपि तत्र न वेदस्य प्रामाण्यमितिवक्तुं योग्यम्। यतो यया युक्त्या वेदस्य प्रामाण्यमेकत्र संसाधनीयं तयैवान्यत्रापि साधयितुं शक्यम्। एवञ्च वेदप्रामाण्यस्याप्रतिहतत्वेनोभावपि भक्तिश्चित्रादियागश्च तत्तत्फलार्थं विहितावितिबोध्यमिति।

ननु चित्रादियागोऽदृष्टमुत्पाद्य तद्द्वारा पश्वादिसाधनं भवेदित्यत आह-*अदृष्ट इति*। दृष्टे फले सत्यदृष्टकल्पनाया अन्यायत्वात् "लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना" इतिन्यायादित्यर्थः। ननु तर्हि श्रुतार्थापत्त्या यागजन्यापूर्वकल्पनाभावे यागः कथं पश्वादिफलमुत्पादयेदित्यत आह-*प्रीतेति*। एवञ्च यागः परमात्मनः प्रीतिमुत्पाद्य तद्द्वारा पश्वादिफलमुत्पादयतीति भावः। प्रीतेः सम्बन्धकुक्षिप्रवेशेन यागस्यैव फलजनकत्वमस्त्वित्याह-* न चेति *। इतोऽपि लाघवादाह-*तदपेक्षेति* । *श्रद्धावानिति*। तत्पूर्वार्धोक्तस्तु "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।

तत्वात् । योगादीनां तु "दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते" ॥ (भाग० १०-४७-२४)

---

श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" ॥ इति । *दानव्रतेति* । दानं-बहिर्वेदिपु दत्तम्, व्रतम्--चान्द्रायणप्रभृति, तपः—कायिकवाचिकमानसिकभेदेन त्रिविधम्, होमः--अग्निहोत्रादिः, जपः-उपांशवादिभेदेनानेकप्रकारक इष्टदेवतामन्त्रोच्चारणरूपः, संयमः--बाह्येन्द्रियाणां परमेश्वरप्रेमोत्पादकविषयभिन्नविषयेभ्यो निवर्तनम्, श्रेयोभिरन्यैः--कन्यादानप्रदानेज्यश्रादिकर्मभिरित्यर्थः । *कृष्णे इति* । एवञ्च सर्वकर्मभिः कृष्णे भक्तिरुत्पद्यते, तया सन्तुष्टश्च परमात्मा तत्तद्भक्त्यनुसारं तत्तत्फलानि प्रददाति । एवञ्च भक्तिरेव सर्वकर्मणां फलदेतिसिद्धमिति ।

सूत्रार्थस्तु--तदेव-परमात्मभजनमेव, मुख्यमित्याध्याहारः । कर्मिज्ञानियोगिभ्यः-कर्मिभिर्ज्ञानिभिर्योगिभिश्च स्वस्वकृतकर्मज्ञानयोगैर्यत्साध्यं तत्तत्फलमजनकभक्तिद्वारैव साधनीयमतस्तेभ्यः, भक्तस्येति शेषः । आधिक्यशब्दात्-वेदरूपगीतायां श्रेष्ठत्वस्य प्रतिपादनात् । "तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" ॥ इत्यादिनेति शेषः । विशिष्टस्याधिक्ये विशेषणस्याप्याधिक्यं फलतीतिभावः ।

प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेरिति-प्रश्नः-अर्जुनकृतानुयोगः, निरूपणम्-भगवद्दत्तोत्तरम्, ताभ्याम्, अधिक्यसिद्धेः—मुख्यत्वसिद्धेरित्यर्थः—सर्वापेक्षातो भक्तेरित्यध्याहारो बोध्यः । अत्र "एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः" । इत्यर्जुनकृतप्रश्नानन्तरम् "मय्यावेश्य मनो ये मां" इत्यादिना भगवता प्रदत्तं विस्तृतमुत्तरं षट्श्लोकात्मकं सर्वमप्यस्य सूत्रस्य सम्बन्धि ज्ञेयम् ।

## नैव श्रद्धा तु साधारण्यात् ।१।२।१७

## (तस्यां तत्वे चानवस्थानात् । १ । २ । १८)

श्रद्धापि भक्तिवन्मुख्या नो वा मुख्या यतः श्रुतौ ।
स्मृतौ च भक्तिवत्तस्या उक्तावश्यकता मुहुः ॥ १७ ॥
न सा मुख्या भवेत्सर्वविहिताङ्गत्वतस्तथा ।
मुख्यत्वे तत्र तत्रापीत्यनवस्थामसक्तितः ॥ १८ ॥

इत्यादिप्रमाणाद्भक्तिसाधनतयैव विहितत्वस्य विवक्षितत्वात्सक-लसाधनसाध्या भक्तिरेव सर्वार्थसाधनमिति सिद्धम् । (१५-१६)

अष्टममारचयति *श्रद्धापीति* । यथा भक्तिर्मुख्या तथा श्रद्धापि मुख्या नवेति सन्देहे—मुख्या । छान्दोग्ये श्वेतकेतुं प्रति तत्वमुपदिशतोद्दालकेनासकृत् "श्रद्धस्व सोम्य" (छां० ६-१२-२)

---

योगस्य यथा साक्षान्मोक्षप्रापकत्वं निराकृत्य भक्त्यङ्गत्वं निर्णीतं तथा श्रद्धाया अपि निर्णयं कर्तुमष्टमाधिकरणं योजयति—*यथा भक्तिरिति* । *श्रद्धस्व सोम्येतीति* । अयमभिप्रायः । तत्र तत्वस्यानेकप्रकारेणोद्दालके-नर्पिणा कथनेऽपि तस्यात्यन्तसूक्ष्मबुद्धिगम्यतया सम्यक्चित्तशुद्धिं विना तस्य सर्वप्रकारेण ज्ञातुमशक्यतया श्रद्धासत्वे कालान्तरेण ज्ञानस्य संभावनयानेक-वारमुद्दालकेन श्वेतकेतुं प्रति श्रद्धां कुर्वित्युपदिष्टमिति । नन्वनेकवारं 'श्रद्धस्व' इत्युपदिष्टत्वेऽपि कथं तस्य मोक्षं प्रति भक्तिवद्मुख्यत्वं ज्ञातुं सुशकम्, भक्त्यङ्गत्वेनापि तद्वचनं योजयितुं शक्यमित्यत आह-

इत्युक्त्या भगवता च गीतायां "श्रद्धावान् भजते यो माम्" (भ०गी०६-४७) इत्यादिनाऽऽवश्यकत्वसूचनेन मुख्यत्वज्ञापनादि-तिप्राप्ते—उच्यते। न श्रद्धा भक्तिवन्मुख्या, सर्वविहिताङ्गत्वात्। किञ्च श्रद्धाया मुख्यत्वे श्रद्धायामपि श्रद्धासापेक्षा तव मते प्राप्तेत्य-नवस्था स्यात्। नचाङ्गत्वेऽपि तद्दोषतादवस्थ्यम्. अङ्गानामपि

*गीतायामिति*। यद्यप्यत्र वचने श्रद्धावतो भजनाधिकार उक्त इति प्रतीतेः श्रद्धाया अङ्गत्वं ज्ञायते, तथापि श्रद्धावतो भजनाधिकार इत्येतावत्या प्रतीत्या श्रद्धाया भक्त्यङ्गत्वं वर्णयितुमशक्यम्, नोचेदेतयैव युक्त्या "वनीभूत्वा प्रव्रजेत्" इतिश्रुतेर्वानप्रस्थाश्रमयुक्तस्य संन्यासाधिकारबोधिकाया वानप्रस्थाश्रमस्य संन्यासाश्रमाङ्गत्वापत्तेः। तथा च वानप्रस्थाश्रमाभावे संन्यासाश्रम-स्वीकारस्याशास्त्रीयत्वापत्तेः। न चैतद्योग्यं "यदहरेव विरजेत्तद-हरेव प्रव्रजेत्" इतिश्रुत्या विरोधात्। एवं च श्रद्धा स्वतन्त्रमेव भक्तिवन्मोक्षा-ङ्गमिति। निराकरोति—*न श्रद्धेति*। अयमभिप्रायः। वानप्रस्थाश्रमस्य संन्यासाश्रमाङ्गत्वबोधने "यदहरेव विरजेत्" इतिश्रुतिविरोधः, परन्त्वत्र श्रद्धाया भक्त्यङ्गत्वकल्पने वचनविरोधाभावेन तथा कल्पनीयमिति।

*सर्वविहिताङ्गत्वादिति*। "श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः" इतिश्रुतेः। अत्र "अग्निः समिध्यते" इतिसर्वसाध्योपलक्षणम्। एवं च साधनबोधिन्या तृतीयाश्रुत्या सर्वसाध्यान्तर्गतभजनरूपसाध्यसाधन-त्वमपि श्रद्धाया स्थितमेव। किञ्च श्रद्धाया मोक्षनिरूपितमुख्याङ्गत्वस्वीकारे श्रद्धायाः सकलसाध्यसाधनकत्वेन सकलसाध्यान्तर्गतश्रद्धाया अपि श्रद्धापेक्षत्वं प्राप्तम्। तत्स्वीकारे त्वनवस्थैवान्तरहिता प्राप्नोतीत्याह-*श्रद्धाया मुख्यत्व इति*। नन्वङ्गमस्तु श्रद्धा तथाप्यङ्गभूतायां तस्यां पुरुषप्रवृत्तिसिद्ध्यर्थं श्रद्धाया अपेक्षितत्वेन पुनरप्यनवस्था तदवस्था स्यादित्याह-*न चाङ्गत्वेऽपीति*।

श्रद्धासापेक्षत्वादिति वाच्यम्। श्रद्धाविषयप्रधाननिदानतयाङ्गानां प्रधानश्रद्धयैव निर्वाहात्।

ननु यथा सिद्धान्ते मोक्षहेतुपरमातिशयिनोऽनुरागस्य कीर्तनादिसमयोत्थेषदनुरागसाध्यत्वेऽपि नानवस्था, तथा तादृशश्रद्धाया निरुक्तश्रद्धासाध्यत्वेऽपि को दोष इति चेन्नैवम्। तथा सति लाघवाच्छ्रद्धाभक्त्योरभेदापत्तिः,। नचेष्टापत्तिः 'श्रद्दधे' 'भजे' इत्यध्यक्षविषययोर्वैलक्षण्यप्रत्यक्षात्। (१७-१८)

---

उत्तरमाह—*श्रद्धेति*। अयमभिप्रायः। मुख्येऽङ्गिनि प्रवृत्यर्थं श्रद्धापेक्ष्यते तया प्रधानविषयकश्रद्धयाऽङ्गेषु मनुष्यप्रवृत्त्युपपत्तौ तत्रान्यश्रद्धापेक्षाभावेनानवस्थापत्यभावात्। यथा "वायव्यं श्वेतमालभेत भूतिकामः" इतिश्रुतिविहितभूतिफलकवायुदेवताकपशुयागे "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेन उपधावति" इत्याद्यर्थवादेन भूतिफलकवायुदेवतात्मकपशुयागः कर्तव्य इतिमुख्ययागविषयियां श्रद्धायामुत्पन्नायां तयैव मुख्ययागनिर्वाहार्थमङ्गेषु प्राशस्त्यबोधकार्थवादाभावेऽपि यथा नान्तरीयकतया प्रवृत्तिस्तथैवात्रापीति।

ननु यथेश्वरविषयकपरमप्रेम्णो मोक्षहेतुत्वेऽपि तस्य सिद्धिः कीर्तनादिकालिकोत्पन्नेषत्प्रेम्णा भवति, एवं च परप्रेम्णः प्रेमापेक्षत्वेऽपि नानवस्था तत्र स्वीक्रियते तथात्रापि परमेश्वरविषयकोत्कृष्टश्रद्धायाः कीर्तनाद्यङ्गविषयकेषच्छ्रद्धासापेक्षत्वेऽपि कथमनवस्था स्यादित्याह—*नन्विति*। उत्तरमाह—*तथा सतीत्यादि*। अयमभिप्रायः। श्रद्धायाः परभक्तेश्च मोक्षकारणत्वे परस्परसापेक्षमुभयं दर्शपूर्णमासवत्कारणं वक्तव्यमथवाग्न्युत्पादकतृणारणिमणिवत्परस्परं निरपेक्षतया कारणं वक्तव्यम्। तत्र परस्परनिरपेक्षतया कारणमसंभवि। "श्रद्धाभक्तिध्यानयोगादवेहि" इतिवचनविरोधापत्तेः। अनेन वचनेनोभयकारणकत्वं ज्ञायते। परस्परसापेक्षतया मुख्यत्वरूपेण कारणत्वपक्षे "श्रद्धया

# ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यात्। १। २। १६

विचार औपनिषदो भक्तिहेतुर्न वा न च।
भक्तिहेतुर्ज्ञानहेतौ भक्तिहेतोरनन्वयात् ॥ १९ ॥

हूयते हविः" इत्यादेः श्रद्धायाः सकलसाध्यसाधनत्वबोधकवचनस्य विरोधापत्तिः। किञ्च तत्पक्षे भक्तितः श्रद्धास्वरूपं गौरवेण भिन्नतया वर्णयितुमशक्यम्। मोक्षकारणं या परमेश्वरविषयिणी श्रद्धा सा भक्तिरूपैव। भक्तिरपि श्रद्धारूपैव। उभयोरेकरूपत्वाङ्गीकरणे तु "श्रद्धाभक्तिध्यानयोगादवेहि" इत्यादिवचनेषूभयोर्बोधनस्यासङ्गत्यापत्तेः। किञ्च 'श्रद्धधे' 'भजे' इतिभिन्नरूपेण प्रतीत्या वैलक्षण्यप्रत्यक्षस्यासङ्गत्यापत्तेः। तस्माद्भक्तिर्मोक्षे प्रधानकारणं श्रद्धा तु तदङ्गतया परम्परया मोक्षे कारणमित्येव समञ्जसमिति।

सूत्रार्थस्तु—अत्र भक्तिपदाध्याहारः। श्रद्धा—आदरबुद्धिः, नैव—भक्तित्वेन नैव स्वीकर्तुं योग्या। तुशब्दः श्रद्धाभक्त्योर्वैलक्षण्यसूचकः, साधारण्यात् श्रद्धायाः कर्ममात्रसाधारणत्वात्। परभक्तेस्तु मोक्षमात्राङ्गत्वादिति।

तस्यां तत्वे चानवस्थानादिति। तस्यामितिसौत्रत्वात् षष्ठ्यर्थे सप्तमी। अथवा तत्वपदबोध्यमुख्यत्वधर्माधिकरणविवक्षया वा सप्तमी। तस्याम्—श्रद्धयाम्, तत्वे—मुख्यत्वे, अनवस्थानात्—अनवस्थापातात्। सर्वस्य मुख्यस्य श्रद्धासापेक्षत्वात्तत्र तत्र श्रद्धापेक्षायामनवस्थाप्रसङ्गादितिभावः। चकारः पूर्वसूत्रे श्रद्धाभक्त्योरेकरूपत्ववारणार्थं 'श्रद्धधे' 'भजे' इतिभेदबोधकप्रत्यक्षप्रतीतिरूपहेतुसमुच्चयार्थं इतिबोध्यम्।

यद्यपि योगादिकानां भक्त्यङ्गत्वनिर्णयेन मुख्यसाध्यत्वं निरस्तं तथापि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिवाक्यैर्ज्ञानोद्देशेन श्रवणादिकं विधीयते। तथा च श्रवणादिद्दष्ट्या ज्ञानस्य प्राप्तसाध्यत्वत्यागेन श्रवणादेर्भक्त्यङ्गत्वस्वीकारे च प्रमाणाभावेन श्रवणादि कथं

विचारो ब्रह्मविज्ञानद्वारा भक्तेस्तु कारणम् ।
ब्रह्माग्निनोरेकफलनियमस्यैव दर्शनात् ॥ २० ॥
मुख्यो ज्ञान इव ब्रह्मविचारो वा न वा भवेत् ।
विचारसाध्यज्ञानेन साध्यभक्तिर्न तं विना ॥ २१ ॥
मैवं ज्ञाने विकल्पोऽस्ति गौणभक्तिविचारयोः ।
हरिभक्तिसुखासक्ता गौणभक्त्यैव तद्विदः ॥ २२ ॥

नवममारचयति-*विचार इति*। श्रवणाद्यात्मको वेदान्तवाक्य-विचारो भक्तिहेतुर्नवेति सन्देहे—न भक्तिहेतुः, ज्ञानहेतौ श्रवणादौ विरक्ताद्यधिकारिके—भक्तिहेतोः भावप्रधानो निर्देशः, भक्तिहेतुत्व-स्यासम्भवात्। भक्तिहेतूनां सर्वाधिकारिकत्वस्याग्रे वक्ष्यमाण-

---

भक्त्यङ्गमितिशङ्कानिवारणपरं नवमाधिकरणमित्याद्यभिप्रायेणाह—*श्रवणाद्येति*। आदिपदं मननादिबोधकम्। *विरक्ताद्यधिकारिक इति*। ज्ञानस्य हेतुभूत-श्रवणमननादौ सर्वस्माद्विरक्तोऽधिकारिणीत्यर्थः। अयमभिप्रायः। सुयोग्योऽधिकारी सर्वमपि साध्यजातं साधयितुमर्हत्येव। यथोपनयनपूर्वकवेदाध्ययन-युक्तः समर्थो धनी ज्ञानसंपन्नोऽनेकफलकयागकर्मस्वधिकारी न तु ज्ञानद्रव्य-सामर्थ्यरहितो ज्ञानद्रव्यसामर्थ्यसाधनसाध्यकर्मस्वधिकारी, विरोधात्, तथा प्रकृते भक्तेरधिकारी योऽविरक्तः स ज्ञानस्य हेतुभूते विरक्ताचरणीयश्रवणादौ नाधिकारी विरोधादिति। ननु भक्तिकारणेषु श्रद्धार्चनवन्दनादिषु यथा

त्वात्, ज्ञानसाधनत्वेनावगतस्य भक्तिं प्रति साधनत्वायोगात्त्वेति प्राप्ते—उच्यते । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वे० १-१० ) इति वाक्यैकवाक्यतानुरोधाद्व्यवस्थितविवेकेन भवनये ज्ञानसाधनतया वेदान्तेषु श्रवणादेः कथनाद्विज्ञानद्वारा भक्तौ श्रवणादिरुपाय इति ।

विरक्तस्याविरक्तस्य सर्वस्याप्यधिकारस्तया ज्ञानहेतुषु श्रवणादिषु कुतो न सर्वाधिकारः । न च विरक्ताधिकारिके श्रवणादावविरक्तस्य नाधिकारो विरोधादित्युक्तमिति वाच्यम् । श्रवणजन्यज्ञानात्पूर्वं विरोधाभावादिति चेदुच्यते । भक्तिहेतुष्वर्चनादिषु वचनात्तयासर्वाधिकारकत्वस्वीकारेऽपि ज्ञानकारणश्रवणादौ तयावचनाभावेन नाधिकार इति भावः । ननु भक्तेर्यदि ज्ञानं साधनं, भक्तेश्चाविरक्तस्याधिकारस्तर्हि भक्तिसाधनज्ञानसाधनश्रवणादावविरक्तस्याधिकारोऽवश्यमङ्गीकरणीय एव । तथाऽस्वीकारे च ज्ञानादेर्भक्त्यङ्गत्वमेव न स्यादितिचेदत आह—*ज्ञानसाधनत्वेनेति* । श्रवणादौ ज्ञानसाधने भक्तिसाधनकत्वस्य कुत्रचिदधिकारिणि दृष्टेऽपि न नियमः । गोप्यादिषु परभक्तिसाधकेष्वदृष्टत्वात् । ज्ञानसाधनस्य तस्य भक्तिसाधनत्वस्वीकारे सर्वदावश्यमङ्गीकरणीयत्वापत्त्या तद्विना भक्तेरसिद्ध्यापत्तेरतो ज्ञानार्थं श्रवणादेरावश्यकत्वेऽपि यत्र विना ज्ञानं भक्तिर्भवति तत्र श्रवणादेर्नास्त्येवावश्यकताऽतो भक्त्यङ्गत्वस्वीकरणं श्रवणादेर्न योग्यमितिभावः ।

सिद्धान्तमाह—*उच्यत इति* । *तस्याभिध्यानादिति* । श्रुतेरवशिष्टं वाक्यम्—"क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इतिबोध्यम् । अस्यार्थः—सर्वजगत्सर्जनी माया, अमृत—( अविनाशि ) —अक्षरपदवाच्यो हरः जीवात्मा, मायाजीवात्मनोः शासक एको देवः परमात्माऽस्ति ।

वर्णकान्तरमाह ॐमुख्य इति॥ । ज्ञान इव ब्रह्मविचारो भक्तौ प्रधानं नवेति सन्देहे—भवति प्रधानं विचारसाध्यज्ञानसाध्याया

तस्य ज्ञानकरणेनाहं स एवेतियोजनेन तत्स्वरूपप्राप्त्या च सकलमायानिवृत्तिर्भवतीति । अयमभिप्रायः । सम्यग्ज्ञानं विना परभक्तेः सर्वथाशक्यत्वमेव । तज्ज्ञानमिह जन्मनि जन्मान्तरे वा भवतु परन्तु तदावश्यकमेव । गोपीष्विह जन्मनि ज्ञानार्थं श्रवणादिकानुष्ठानस्यादृष्टत्वेऽपि परभक्तिप्राप्तिरूपलिङ्गेन पूर्वजन्मनि तासां तदनुष्ठानकर्तृकत्वकल्पनात् । एवञ्च परभक्त्यर्थं श्रवणादीनामस्त्येवावश्यकता । यद्यपि श्रवणादिकानां साक्षाद्भक्त्यङ्गत्वं नास्ति तथापि ज्ञानद्वारा तेषां श्रवणादिसाधनानां भक्त्युपकारकत्वं स्वीकार्यमत एव वेदान्तेषु "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुत्या भक्त्यायेव ज्ञानसाधनतया तेषां विधानादिति ।

ननु ज्ञानस्य यथा वेदान्तवाक्यविचारः साधनं तथा गौणभक्तिरपि । तथा च श्रुत्यवतारभूतासु गोपीषु पूर्वजन्मनि श्रवणादिकर्तृकत्वकल्पनाया नोपयोग इतिचेत्सत्यमेतदभिप्रायेणैवास्मिन्नधिकरणे ज्ञानस्य गौणभक्तितोऽप्युदयसंभवाद्विचारस्य ज्ञानोत्पत्तौ क्वचिदधिकारिविशेष आवश्यकत्वेऽपि सर्वत्र ज्ञानप्राप्तौ न ब्रह्मविचारस्यावश्यकतेति सिद्धान्तं प्रतिपादयितुं वर्णकान्तरमाह–*ज्ञान इवेति* । *प्रधानमिति* । नन्वत्र भक्तिं प्रति प्रधानसाधनयोर्ज्ञानविचारयोः परस्परं कथं साध्यसाधनभावः, "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्" इतिन्यायविरोधादितिचेन्न । नात्रास्य न्यायस्य प्रवृत्तिः, किन्तु "गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते । प्रधानस्योपकारे हि तथा भूयसि वर्तते"॥ इत्येव न्यायोऽत्र प्रवर्तते । अनयोर्न्याययोरस्त्येव विषयविभागः, यत्र परस्परनिरपेक्षकारणसमुदायस्तत्र पूर्वोक्तन्यायः । यत्र च कारणेषूपकार्योपकारकत्वस्वीकारं विना तेषां मुख्यकार्योत्पादने न सामर्थ्यं तत्र द्वितीयन्यायप्रवृत्तिरितिबोध्यम् ।

ननु सर्वदैव ब्रह्मविचारः कर्तव्य इत्यत्र किं प्रमाणमितिचेत्तत्राह––

भक्तेर्विचारं विनानुपपत्तेः । अत एव "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इत्यादिना मुमुक्षुं प्रति विचारो नित्यवदुक्त इति प्राप्ते-उच्यते । न प्रधानम्, तत्वज्ञानं प्रति गौणभक्तिविचारयोर्वैकल्पिककारणतयाऽधिकारिविशेषे ज्ञानं प्रति विचारस्यावश्यकत्वेऽपि भक्तिसुखासक्तान्प्रति तस्यानावश्यकत्वात्, भजनीयस्वरूप-

---

*आसुप्तेरिति* । अस्मिन् वचने यद्यपि "अहरहः सन्ध्यामुपासीत" इतिवन्नित्यत्वबोधकवीप्साबोधकं पदद्वित्वं नास्ति तथापि "यावज्जीवमग्निहोत्रं जुहोति" इत्यत्र यथा 'यावज्जीवम्' इति नित्यत्वसूचकपदमस्ति तथात्र 'आसुप्तेः' 'आमृतेः' इतिपदद्वयेन वेदान्तविचारस्य नित्यत्वसूचनादितिभावः ।

सिद्धान्तमाह—*उच्यत इति* । अयमभिप्रायः । "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः" इत्यादिवचनैर्गौणभक्तेर्ज्ञानकारणत्वं बोध्यते, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादिभिश्च ब्रह्मविचारमननादेर्ज्ञानं प्रति साधनत्वमुच्यतेऽतोऽत्र ज्ञानं प्रति साधनद्वयस्य समुच्चय उताधिकारिविशेषापेक्षया विकल्प इतिविचारे विकल्प एव योग्यः, यतो परायां भक्तौ प्राणिमात्रस्याधिकारः, ब्रह्मविचारे च साधनचतुष्टयसंपन्नस्य यतेरेव । यदि साधनद्वयस्य ज्ञानं प्रति समुच्चयः स्वीक्रियेत तदा प्राणिमात्रस्य भक्तावधिकारकथनं व्यर्थमेव भवेदतो विकल्प एव ज्ञानं प्रति ब्रह्मविचारगौणभक्त्योः स्वीकरणीयः । ज्ञानस्योपयोगस्तु भजनीयपरमात्मनो यथार्थस्वरूपसाक्षात्कार एव, स च गौणभक्त्याप्यधिकारिविशेषे संभवत्येवेति । *वैराग्यं न स्यादिति* । अयमभिप्रायः । भक्तेरुपायो ज्ञानम् । तच्च साधनचतुष्ट संपत्ति विनाऽसम्भवि । साधनचतुष्टयं च तद्घटकेहामुत्रार्थफलभोगविरागशमदमादिसंपत्त्यादिकं विना न संभवति, सा चासक्तिराहित्यं विनासंभव्यतो भक्तिसुखासक्तेषु वैराग्याभावेन वैराग्यादिमूलककारणपरम्प-

निर्गुणस्य गौणभक्तितोऽपि सम्भवात् । नचैवं भक्तिसुखाद्वैराग्यं न स्यादिति वाच्यम् . इष्टापत्तेः ।

"निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।

क उत्तमश्लोकगुणानुवादात्पुमान् विरज्येत विना पशुघ्नात् ॥"

( भाग० १-१-६ )

इत्यादिनोत्तमश्लोकगुणानुवादस्य ब्रह्मविदुपगीयमानत्वभव-रोगनिवर्तकत्वसुन्दरतमविषयकत्वेन श्रोत्रमनःप्रीतिविषयकत्वक-

---

त्वा भक्तेरसम्भव एवेति । *इष्टापत्तेरिति* । इदमाकूतम् । ज्ञानं प्रति यथा साधनचतुष्टयसंपन्नमुमुक्षुकृतश्रवणादिकारणं तथा भक्ताचरितगौणभक्तिरपि । अतो गौणभक्त्या सिद्धज्ञानिनो भक्तिसुखासक्तत्व इष्टापत्तिरेव ।

ननु विशेषाधिकारिणः साधनचतुष्टयसंपन्नस्य भक्तिसुखासक्तत्वे वैराग्य-हान्या साधनचतुष्टयसम्पत्त्यभावेन ज्ञानानुत्पत्त्या भक्तेरभाव इतिचेन्न, "आत्मा-रामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः" ॥ इतिवचननिष्ठप्रामाण्येन 'इहामुत्रार्थफलभोगविरागः' इत्यत्र परमात्मभक्ति-जन्यसुखरूपफलातिरिक्तफलस्य ग्रहणेन भक्तिसुखासक्तत्वेऽपि मुमुक्षुत्वसंभवेन ज्ञानोत्पत्त्या भक्तिरुपपन्नतैव । एवञ्च भक्तिसुखाद्वैराग्यं न स्यादितीष्टापत्तिरेवेति । अत्र प्रमाणमाह—*निवृत्तेति* । अस्यार्थः—गततृष्णैर्मुक्तैरिति यावत्, यस्मात् परमात्मगुणानुवादात्, मुमुक्षूणामप्युपादेयत्वार्थमाह—भवौषधादिति-संसाररूपरोगस्य नाशकात्, विषयिणामुपादेयत्वमाह—श्रोत्रमनोभिरामादिति । आत्मघातिनः पशुघातिनो वा प्रवृत्तिर्न दृश्यतेऽत आह—विनापशिवति । अपगता शुग् यस्मात्सोऽपशुगात्मा तं हन्तीत्यपशुघ्नस्तस्मात् । अथवा पशुघ्नादिति-च्छेदस्तदा पशुघातिनः कर्मपरेश्वरानङ्गीकर्तृमीमांसकादित्यर्थः । अनेन स्पष्टमेवोक्तं मुक्ता अपि परमात्मगुणानुवादाद्विरक्ता न भवन्तीति ।

थनेन जडकल्पविरक्तिविषयत्वाकथनात् । स्यादेतत् । अल्पायास-साध्याया भक्तेः कष्टसाध्येन विचारेण विकल्पस्तु कथमितिचेत्-विचारस्येव श्रवणादिभक्तेरपि स्वफलजनने वस्तुतो यज्ञाद्यनुष्ठान-साध्यश्रद्धासापेक्षतयाऽऽयासाविशेषाद्विकल्पः सम्भवतीत्यवेहि ।

नन्वथापि न सम्भवति तयोर्द्वारैक्याभावात् । व्रीहियवयोर्द्वारै-क्यादेव विकल्पाभ्युपगमात् । प्रकृते तु वेदान्तविचारेणाप्रामाण्यादि-शङ्कानिवृत्त्या तत्त्वबोधः, साधनभक्त्या तु भगवदनुग्रहेणेति द्वारभेद एव, तस्मादविकल्प एव । द्वारभेदे प्रयाजावघातयोर्विकल्पादर्शना-

---

अल्पायाससाध्यमहाप्रयाससाध्ययोर्विकल्पो न संभवति. यतो मनुष्यस्य अल्पायाससाध्यकर्मकरणे स्वाभाविक्येव प्रवृत्तिरतो ब्रह्मविचारे कश्चिदपि न प्रवर्तेतातो कथं विकल्प इत्याशयेन शङ्कते—*स्यादेतदिति* । *यज्ञाद्यनुष्ठानेति* । अत्रेदमाकूतम् । यथा ब्रह्मविचारः साधनचतुष्टयसंपत्तिं संपादयितुं कष्टकारकस्तथेह जन्मनि जन्मान्तरे वा श्रवणादिगौणभक्तेरपि "दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते" ॥ इत्यादिवचनैर्यज्ञाद्यनुष्ठानसाध्यवास्तविकश्रद्धापेक्षितत्वेनोभयोः समानायाससाध्यतया यथारुचि यथाधिकारं विकल्पः संभवत्येवेति ।

एकप्रयोगविधिपरिगृहीतत्वे सति द्वारैक्यमेव विकल्पप्रयोजकम्, गौण-भक्तिश्रवणादिकयोस्तदभावाद्विकल्पो न संभवतीति शङ्कते—*नन्विति* । द्वारैक्यस्य विकल्पप्रयोजकत्व उदाहरणमाह—*व्रीहीति* । तद्वदत्र द्वारभेदो नास्तीति प्रतिपादयति—*प्रकृते त्विति* । एकत्र प्रामाण्यशङ्कानिवृत्तिरपरत्र भगवदनुग्रह इतिद्वारभेद इतिभावः । यत्र द्वारभेदस्तत्र विकल्पो न स्वीक्रियतेऽत्रोदाहरणं प्रदर्शयति—*प्रयाजेति* । प्रयाजावघातजन्यापूर्वयोर्भेदा-दित्यर्थः । द्वारभेदेऽपि यत्रैकप्रयोगविधिसम्बन्धित्वं नास्ति फलैक्यं चास्ति तत्रापि विकल्पः स्वीक्रियत एव । एकस्यैकविधिपरिगृहीतत्व एव द्वारैक्यं विकल्प-

विति चेदैवम्। हरिभक्तिवेदान्तविचारयोर्द्वारभेदेऽप्येकप्रयोगविधि-परिगृहीतत्वाभावाद्व्रीहियवबलभिद्यागयोरिव विकल्पसम्भवात्। यद्यपि विकल्पोऽष्टदोषदुष्टः। तथाहि। यदि हरिभक्तिर्ज्ञानसाधनं, तर्हि वेदान्तविचारबोधकवाक्यस्य प्रामाण्यं परित्यक्तं स्यात्। अप्राप्तं चाऽप्रामाण्यं स्वीक्रियेत। यदा पुनर्वेदान्तविचारः साधनम्, तदा वेदान्तविचारबोधकवाक्यस्य पूर्वं त्यक्तं प्रामाण्यं स्वीक्रियेत, पूर्वं स्वीकृतं चाप्रामाण्यं परित्यज्येत प्राप्तपरित्यागोऽप्राप्तस्वीकारः त्यक्तस्वीकारः, स्वीकृतपरित्यागश्चेति दोषचतुष्टयं वेदान्तविचारावेदकवाक्ये। तथा हरिभक्त्यावेदकवाक्येऽपि दोषचतुष्टये योजिते सन्त्यष्टौ दोषाः संपद्यन्ते। तस्मान्न विकल्पो युक्तः, किंतु कथंचिदङ्गाङ्गिभावेन समुच्चय एव युक्तः। हरिभक्त्यान्तःकरणशुद्ध्या वेदान्तविचारेण ज्ञानप्राप्त्या परभक्तिरितिचेत्-विकल्पस्याष्टदोषदुष्टत्वेऽपि व्रीहियवयोरिव प्रमाणसिद्धस्यावश्यमभ्युपेयत्वात्। अन्यथा भक्तेः सर्वाधिकारिकत्वबोधकवाक्यानामप्रामाण्य

---

प्रयोजकमन्यत्रैकफलसाधनत्वमेव विकल्पप्रयोजकमित्यभिप्रायेणाह—* नैवमिति *। ननु विकल्पस्वीकारेऽष्टदोषप्राप्तिस्तदपेक्षया कथञ्चिदङ्गाङ्गिभावस्वीकारेण समुच्चय एवोचित इत्यत आह—* यद्यपीति *। दोषाष्टकं प्रदर्शयति-* तथाहीति *। यत्र साधनद्वयं विहितमस्ति तत्रैकस्य प्रथमतो प्रयोगाङ्गतया स्वीकारेऽपरस्य विहितस्य तयाऽस्वीकारे च, तथा कदाचिदपरस्य प्रथमतः स्वीकारे स्वीकृतस्य च त्यागे दोषाष्टकं प्राप्नोतीति तात्पर्यम्। एवं च समुच्चय एवोचित इत्यभिप्रायेण समुच्चयं प्रदर्शयति—* हरिभक्त्येति *। प्रमाणसत्वे विकल्पस्वीकारे दोषाभाव इत्याह—* विकल्पस्येति *। विकल्पास्वीकारे दोषमाह—* अन्यथेति *।

सूत्रार्थस्तु—ब्रह्मकाण्डशब्देन श्रवणार्थको वेदान्तभाग उच्यते, तस्य-ब्रह्मणः, भक्तौ-निमित्तसप्तमीयं भक्तिनिमित्तमित्यर्थः। अनुज्ञानाय-अनु-ज्ञानीयज्ञानात्पश्चाद्विज्ञानं तदर्थम्, सामान्यात्—ज्ञानभक्त्योरङ्गाङ्गिनोरेका-

( अधिकरणविषयसङ्ग्रहमाह— )

मुख्यत्वमागमात्तस्या अविकल्पो धिया सह ।
अन्यानङ्गत्वमप्यत्र श्रुतिशास्त्रादिसिद्धता ॥ १ ॥
योगाच्छ्रैष्ठ्यं फलादस्या अहेयत्वं मुमुक्षुवत् ।
एतद्भिन्नान्यथा सिद्धिः फले श्रद्धा विभिन्नता ॥
विचारस्यापि हेतुत्वं किं वा ज्ञानेऽस्य मुख्यता ॥ २ ॥

इति प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तः प्रथमोऽध्यायः

——*——

तयोर्निरपेक्षसाधनत्वबाधश्च प्रसज्येतेति संक्षेपः ।

समाप्तं द्वितीयाह्निकं प्रथमोऽध्यायश्च ।

---

र्थत्वात्-एकप्रयोजनकत्वादितियावत् । एवञ्च "आत्मा वा अरे द्रष्टव्यः" इत्यादिवेदान्तवाक्यैर्भक्त्यर्थमेव ज्ञानोद्देशेन श्रवणादिकं विधीयते न तु ज्ञानप्रधानेनातो न कोऽपि विरोध इत्यभिप्राय इति ।

अस्मिन्नाह्निके स्थितानामधिकरणानां विषयस्य सुखेन ग्रहणार्थं श्लोकरचनां विदधाति—* मुख्यत्वमित्यादि * ।

अत्र प्रथमाध्यायस्य द्वितीयाह्निके नवाधिकरणानि, एकोनविंशति सूत्राणि च । तैश्च भक्तेः सर्वापेक्षया मुख्यत्वं मोक्षं प्रति मुख्यसाधनत्वं च निरूपितम् ।

इति भक्त्यधिकरणमालाटीकाटिप्पण्यां संदिग्धार्थप्रकाशिन्यां प्रथमाध्यायस्य द्वितीयाह्निकम् । समाप्तः प्रथमोऽध्यायः ।

---

# अथ द्वितीयोऽध्यायः

## तत्र प्रथमाह्निकम् ।



### बुद्धिहेतुप्रवृत्तिराविशुद्धेरवघातवत् । २ । १ । १

कार्यं मुहुः सकृद्वा तत् पूर्वोक्तं ज्ञानसाधनम् ।
सकृत्कृतं हि विहितं सफलं क्रतुवन्मतम् ॥१॥
अदृष्टद्वारकत्वादेरेवानुष्ठानमेकदा ।
अवघातादिवद्दृष्टद्वारमावर्त्यमेव तत् ॥२॥

तत्र प्रथमाह्निके सप्तदशाधिकरणानि । तत्र प्रथममारचयति—
※कार्यमिति※।

---

प्रथमेऽध्याये प्रथमाह्निके भक्तेः स्वरूपादिकं द्वितीयाह्निके च तस्या मोक्षं प्रति प्रधानसाधकत्वं सर्वसाधनापेक्षयोत्कृष्टत्वं च प्रतिपादितम् । अत्र द्वितीयाध्याये सञ्जातविवेकवैराग्यस्यापरिपक्वभक्तिकस्य कृते भक्तेः साक्षात्प्रधानत्वनिष्पादकत्वेव तदितिकर्तव्यं साधनेष्वन्तरङ्गसाधनं ज्ञानं बहिरङ्गसाधनानि श्रवणाद्यपरभक्त्यादीनि च, तेषां विवेकादिकमारभ्यते-※ कार्यमितीति ※। प्रथमाध्यायद्विती-

वेदान्तविचारसाधनभक्त्योर्मौहिकवद्वैहिकफलकत्वेऽपि तदु-द्वयं सकृदसकृद्वाऽनुष्ठेयमिति संदेहे—"सकृत्कृते कृतः शास्त्रार्थः" इति न्यायेन तेषां क्रतुप्रयाजादेरिव सकृदेवानुष्ठानं तावतैव फलसिद्धेरितिप्राप्ते—उच्यते । उक्तन्यायस्यादृष्टफल-

---

वाह्निकान्तिमाधिकरणे कृतसिद्धान्तेन सह प्रकृताधिकरणस्य सम्बन्धं प्रदर्शयितुमाह—* वेदान्तविचारेति * । तद्, श्रवणादिकं वा सकृदेवानुष्ठातव्यं लाघवात् "सकृत्कृते कृतः शास्त्रार्थः" इति न्यायात्स्येति पूर्वपक्षप्रतिपा-दनमाह—*सकृदित्यादि* । * क्रतुप्रयाजादेरिवेति * । "चित्रया यजेत पशुकामः" "कारीर्या वृष्टिकामो यजेत" इत्यादिवाक्यश्रुतचित्राकारीरी-त्यादिषु, तथा "समिधो यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" "तनूनपातं यजति" इतिवाक्यश्रुतप्रयाजविधीनां सकृदनुष्ठानं कर्तव्यमसकृद्वेति विचारे सकृदेवानुष्ठानं कर्तव्यं तावतैव विधानस्य कृतार्थत्वेन फलसिद्धिर्यथा, तथैव मोक्षसाधनं श्रवणादिकं च सकृदेव कर्तव्यं तावतैव "श्रोतव्यो मन्तव्यः" इत्यादिविधीनां कृतार्थत्वेन साफल्यमितिभावः ।

सिद्धान्तमाह—* उक्तन्यायस्येति * । "सकृत्कृते कृतः शास्त्रार्थः" इतिन्यायस्येत्यर्थः । * अदृष्टफलविषयत्वादिति * । यज्ञजपमन्त्रदे-होमाद्यदृष्टफलविषयत्वादित्यर्थः । अयमभिप्रायः । लोके 'अन्नं शरीरसंरक्ष-णार्थं भुङ्क्ते' इत्यादिवाक्येषु क्रियाया असकृदावृत्तिर्दृश्यते, तथा 'यज्ञं क्रियते' इत्यादिष्वेकवारमेव क्रिया, तथा वेदप्रतिपाद्यार्थेषु भवति शङ्का किं सकृदनुष्ठानमुतासकृदिति । तत्र लोकस्य प्रायः सकृदनुष्ठान एव प्रवृत्तिर्दृश्यते, कर्मणः फलजनकत्वात्तावतैव शास्त्रस्य चारितार्थ्यम् तथाप्यस्य न्यायस्य न सर्वत्र प्रवृत्तिः किन्त्वदृष्टस्वर्गादिफलविषय एव, अतः तस्य फलस्य

विषयत्वादत्र ब्रह्मसाक्षात्कारद्वारा परभक्तिलक्षणस्य दृष्टफलस्य संभवात् "दृष्टे संभवत्यदृष्टं न कल्पनीयम्" इतिन्यायेनावघातादि-वत्फलसिद्धिपर्यन्तं तदवश्यमावर्तनीयमित्यर्थः। इदं तु बोध्यम्।

---

सिद्धिर्जाता नवेति प्रत्यक्षेण ज्ञातुमशक्यतया तत्र स न्यायः प्रवर्तते, यत्र च फलं दृष्टं तत्र यावत्फलोत्पत्ति क्रियाया आवश्यकत्वेन नात्र स न्यायः प्रवर्तत इति।

ननु श्रवणादिष्वप्यदृष्टफलस्वीकारेण नावृत्तिकरणमावश्यकमित्यत आह— *अत्र ब्रह्मेत्यादि*। *इतिन्यायेनेति*। न्यायार्थकभिन्नानुपूर्वीकथनमिदम्। प्राचीनपठितानुपूर्वी तु "लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना" इति "दृष्टे सम्भवत्यदृष्टकल्पनाया अन्यायत्वात्" इतिवोपलभ्यते। असकृदावर्तने दृष्टान्त-माह-* अवघातादिवदिति *। यथावघातः "व्रीहीनवहन्ति" इतिवाक्यवि-हितो दृष्टफलकत्वाद्यावत्तुषविमोकं न जातस्तावत्पर्यन्तोऽनुष्ठीयते तथात्रापि बोध्यमिति भावः। ननु श्रवणादिविचारसाधनानां सर्वथा दृष्टफलकत्वे श्रवणादिकं यस्य कस्यापि भाषालिखितस्यापि ग्रन्थस्य कर्तव्यं न तु वैदिकग्रन्था-नामेव, तथा च तत्कर्तुः सर्वस्याप्यात्मज्ञानेऽधिकारः प्राप्नोति न तु ब्राह्मणादित्रैवर्णि-कानामेव, तथाचापशूद्राद्यधिकरणविरोधः। तत्र ह्युपनीतानां त्रैवर्णिकानामेवा-धिकार उक्त इत्यतोऽभिप्रायं प्रदर्शयति—* इदं तु बोध्यमिति *। "स्वाध्या-योऽध्येतव्यः" इति विहितवेदाध्ययनस्य वेदार्थविचारपर्यन्तं विवक्षितत्वेन वेदान्तविचारोऽपि वेदाध्ययनपूर्वक एव कर्तव्यः, इतिनियमनेन शूद्रादिकानां निवृत्तेः, तथा नियमजन्यमदृष्टं परभक्तावुपयुज्यते, तं विना परभक्ते-र्यथासंभवादवघातजन्यापूर्वं विना दर्शपूर्णमासजन्योत्पत्त्यपूर्वप्रयोज्यपरमापूर्वा-भाववदिति।

दृष्टार्थत्वेऽपि विचारस्य "स्वाध्यायोऽध्येतव्यः" इति पुराणादिनिरासेन वेदान्तनियमोऽदृष्टार्थ इति। तददृष्टं साक्षात्कारद्वारा परमभक्तावुपयुज्यत इति। एवं मननस्य युक्तिचिन्तनरूपत्वेऽपि "मन्तव्यश्चोपपत्तिभिः" इत्युपपत्तिचिन्तनोपदेशाद्द्वैतस्य त्रिकालवृत्त्यत्यन्ताभावप्रतियोगित्वरूपानिर्वाच्यत्वाभावेन ज्ञानेन विनाशो न स्यादित्यार्षयुक्त्यनुसंधाननियमोऽपि।

---

* पुराणादिनिरासेनेति *। नैतद्रम्यम्। स्वाध्यायपदस्य यथा सम्पूर्णवेदाध्ययनस्याशक्यकर्तव्यतया स्वशाखायां लक्षणाङ्गीकृता, तथा स्वाध्यायपदेन लक्षणया पुराणादिकमपि स्वीकर्तुं शक्यते। अत एव ब्रह्मयज्ञे "गाथानाराशंसीरितिहासपुराणानीति" इति ऋग्वेदाश्वलायनसूत्रे पुराणानां गाथादिभिः सह विनियोगो दृश्यते। प्रयोगकारैरपि "नारायणं नमस्कृत्य" इति भारतादेर्विनियोगः कृतः। एवं च स्वाध्यायनियमविधिना पुराणादिनिरासे न ग्रन्थकारस्य तात्पर्यम्, किन्तु ये वेदाध्ययनमकृत्वा भाषाग्रन्थं पुराणमात्रं वा पठित्वा विचारं कुर्वन्ति तत्पठितपुराणादिनिरसनं स्वाध्यायविधिना क्रियत इत्यत्रैव ग्रन्थकारस्य तात्पर्यमुन्नेयम्।

*अदृष्टार्थ इति*। अपूर्वार्थ इत्यर्थः। *साक्षात्कारेति*। यथापूर्वमवघातजन्यमपूर्वं यथोत्पत्त्यपूर्वप्रयोज्यपरमापूर्वद्वारा फलोत्पादकमेवमत्रापि परमात्मनः साक्षात्कारद्वारा परप्रेमास्पदभक्त्युत्पत्तौ कारणमिति भावः। एवं मननेऽपि नियमः। आर्षयुक्तिचिन्तनमेव कर्तव्यं न लौकिकयुक्तिचिन्तनमित्याकारकः, तथा तज्जन्यमपूर्वं परमात्मसाक्षात्कारद्वारा परभक्त्यावुपयुज्यत इति कथयति— * एवं मननेति *। आर्षयुक्तिं प्रदर्शयति—* द्वैतस्येति *। अत्रायमभिप्रायः। यच्च कदाचिदपि वस्तुतो नास्ति तत्त्रैकालिकात्यन्ताभावप्रतियोगिरूपं रज्जुसर्पवदस्ति, तस्य ज्ञानेन विनाशो युक्तः, परन्तु संसारस्तु वर्तमानकाले वस्तुतो यथानुभूयते तथा भूतकालेऽप्यन्वभूयत, भविष्यत्कालेऽप्यनुभविष्यते तस्य ज्ञानेन सर्वथा विनाशोऽयुक्त एव, किन्तु परमात्मस्वरूपज्ञानद्वारा परमात्मपरभक्त्येति।

एवं ध्यानाश्रित आसीनत्वादिनियमोऽपि। एतावांस्तु विशेषो वेदान्तानामद्वितीयात्मपरतानिश्चयरूपेण श्रवणेन तत्र तेषामन्यपरताशङ्काधीनाप्रामाण्याशङ्कानिरासः। युक्त्यनुसंधानेन प्रत्यक्षविरोधाशङ्काधीनाऽप्रामाण्यशङ्कानिरासः। ध्यानाभ्यासेन भेदबुद्धिनिरासः। गौणभक्त्या तु भगवदनुग्रहमात्रमिति।( १-२ )

---

*एवं ध्यानेति*। अत्रापि ध्यानादिनियमजन्यमपूर्वं परभक्तावुपयुज्यत इति ज्ञातव्यमित्यर्थः। साधनभूतयोः श्रवणगौणभक्त्योः फले तारतम्यं प्रदर्शयितुमाह-*एतावांस्तु विशेष इति*। अप्रामाण्यमनेकप्रकारकम्। तत्र श्रवणं सर्वेषां वेदान्तानामद्वितीयात्मवस्तुनि तात्पर्यमितिश्रोतुर्निश्चयं कारयित्वाऽद्वितीयात्मवस्तुभिन्नप्रतीयमानवस्तुनि वेदान्तानां तात्पर्यमित्यादिशङ्काधीनाप्रामाण्यं निरस्यति। मननं त्वनेकार्षयुक्तिसंधानरूपम्। वस्तुतो दुःखादिदायकत्वेन जगत्सर्वदा सत्यरूपेण प्रतिष्ठत्येव कथं तस्य ज्ञानेन विनाशः प्रत्यक्षप्रमाणविषयत्वादित्यादिप्रत्यक्षादिप्रमाणविरोधमूलकाप्रामाण्यशङ्कां वारयति। ध्यानजनिताबुद्धिस्तु सर्वत्रात्मदर्शनेन द्वैतबुद्धिं वारयति। एवञ्च श्रवणादिकारणानामप्रामाण्यशङ्कानिरसनद्वारानन्दस्वरूपपरमात्मसाक्षात्कारद्वारा च परभक्तावुपयोगः। गौणभक्त्या श्रवणवन्दनार्चनादिरूपया तु ज्ञानद्वारा साक्षादानन्दरूपपरमात्मनोऽनुग्रह इति भावः।

सूत्रार्थस्तु—बुद्धिहेतुप्रवृत्तिः- ( बुद्धेर्हेतवस्तेषां प्रवृत्तिः ) बुद्धेः-ब्रह्मप्रतिपत्तेः, हेतूनां—श्रवणमनननिदिध्यासनानां गौणभक्तेश्च, प्रवृत्तिः-असकृदावृत्तिः, आविशुद्धेः भक्तिपरिशुद्धिपर्यन्तम्, कार्येतिशेषः। दृष्टफलकहेतूनां यावत्फलोत्पत्तिमभ्यासः कर्तव्य इत्यत्रानुकूलं दृष्टान्तं कथयति अवघातवदिति-यथा "व्रीहीनवहन्ति" इति विहितावघातो यावद्वैतुष्यमनुष्ठीयते तथेतिभावः।

## तदङ्गानाञ्च । २ । १ । २

तदङ्गानां तदावृत्तिर्नास्त्यत्र किमुतास्ति वा ।
नास्ति सा श्रवणादिभ्यो ब्रह्मबुद्धेः सुसंभवात् ॥३॥
अस्त्येव सा ततो मोक्षानुगुणश्रवणादितः ।
विषयानुगसंस्कारलोपतः स्यात्तथा श्रुतेः ॥४॥

द्वितीयमारचयति—※तदङ्गानामिति※ । विचाराद्यन्तरङ्गाणां शान्तिदान्त्यादीनां गुर्वनुगमनादीनां चासकृदावृत्तिरस्ति नवेतिसंदेहे—नास्ति श्रवणादित एव ब्रह्मबुद्धेः संभवात्तेषां

---

यथा ब्रह्मप्रतिपत्तिहेतूनां श्रवणादीनामसकृदावृत्तिर्विहिता तथा विचारान्तरङ्गाणां शान्तिदान्तिप्रभृतीनामसकृदावृत्तिरवश्यं कर्तव्येति बोधनार्थं द्वितीयाधिकरणं योजयितुमाह—※ तदङ्गानामितीति ※। "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति" इत्यादिश्रुतिबोधितानां विचारान्तरङ्गभूतानामित्यर्थः। तत्र शान्तिः—श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। दान्तिः—बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। आदिपदग्राह्योपरतितितिक्षासमाधिश्रद्धासूपरतिः—निवर्तितानामेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमथवा विहितानां नित्यादिकर्मणां संन्यासाश्रमस्वीकारेण परित्यागः। तितिक्षा-शीतोष्णादिद्वन्द्वसहिष्णुता। समाधिः–निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधानम्। श्रद्धा–गुरूपदिष्टवेदान्तवाक्येष्वादरबुद्धिः। गुर्वनुगमनम्–वेदान्तवाक्यश्रवणार्थं शङ्कापनोदनार्थं च प्रत्यहं तत्समीप आदरेण गमनम्। आदिपदबोध्यं तदुपदिष्टाचारपरिपालनमिति। पूर्वपक्षप्रतिपाद्यमाह—※ श्रवणादित एवेति ※। ननु ज्ञानप्रतिबन्धक्षयश्रेष्ठा-

व्रताद्यङ्गं किमाजन्मावर्तनीयं न वा न हि ।
क्रतुवद्बहिरङ्गं तदनावश्यकतः श्रुतेः ॥५॥
योगे यमादिवत्सम्यावर्त्यं चित्तविशुद्धये ।
लिङ्गं तत्रापि कुण्डाद्यैरेव व्यासप्रमाणतः ॥६॥

कृत्याभावात्. यथेष्टाचारिणामपि ज्ञानदर्शनाच्चेति प्राप्ते—उच्यते । प्रतिबन्धकविषयवासनासत्त्वे मोक्षानुगुणप्रज्ञायाः श्रवणादिकोटिभिरप्यनुत्पत्तेर्विषयवासनानिरासद्वारा श्रवणाद्युपकारिणां शान्त्याद्यङ्गानामप्यसकृदावृत्तिरेव, "सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्" इत्यादिश्रुतेरित्यर्थः । (३-४)

वर्णकान्तरमाह-*व्रताद्यङ्गमिति* । व्रतमेकादश्याद्युपोषणम् । आदिना तीर्थसेवनादि । तद्भक्त्यङ्गमुक्तं गौतमीयादौ--

---

चरखवारखार्य—शान्त्यादीनामस्त्येवोपयोग इत्यत आह-*यथेष्टाचारिणामिति* । * प्रतिबन्धकेति * । अयं भावः । विषयवासनासत्त्वे विषयेषु धर्माधर्मबुद्धिराहित्येन प्रवृत्त्या यथेष्टाचारित्वम्, तत्सत्त्वे ज्ञानप्रतिबन्धकीभूतविषयवासनाया अवश्यं सत्त्वेन श्रवणादीनामनन्तवारं करणेऽपि न यथार्थज्ञानलेशोदयोऽपि । एवञ्च विषयवासनानाशार्थं श्रवणाद्यन्तरङ्गभूतानामपि शान्त्यादीनामावृत्तिरवश्यं निरन्तरं कर्त्तव्येत्याह—* विषयवासनेति * ।

पूर्वं भक्तेरङ्गं ज्ञानमुक्तं तस्याङ्गं च विकल्पेन गौणभक्तिः श्रवणादिकं चोक्तम् । अस्मिन्नधिकरणे ज्ञानस्याङ्गभूतस्य श्रवणादेरङ्गभूतशान्तिदान्त्यादीनामनेकवारमावृत्तिः कर्तव्या न वेति चिन्तनेऽपि ज्ञानस्याङ्गभूतगौणभक्तेरङ्गभूतैकादश्यादिव्रतानां तीर्थसेवनाद्याचाराणां चासकृदावृत्तिः कर्तव्या न वेति शङ्कावारणार्थं तद्विचार आवश्यक इत्यभिप्रायेण वर्णकान्तरं रचयति—* व्रताद्यङ्गमितीति * । * गौतमीयादाविति * । गौतमीयतन्त्र इत्यर्थः । आदिना नारदपाञ्चरा-

"सर्वपापक्षयकरं सर्वपुण्यविवर्धनम् ।
गोविन्दस्मृतिमत्पुंसां यदेकादश्युपोषणम्" ॥ तथा—
"वैष्णवेष्वथ क्षेत्रेषु द्वारकामथुरादिषु ।
निवासो हरिभक्तानां हरिसायुज्यदो मतः" ॥
महाभारते—
"मरणे स्मरणं विष्णोर्यद्यप्यत्यन्तदुर्लभम् ।
तदप्यल्पेन कालेन गङ्गां संसेव्य लभ्यते" ॥
इत्यादि । एवं सद्धर्मपृच्छाभोगत्यागाद्यङ्गं किं जन्मपर्यन्त-

आदिग्रहणम् ।* सर्वेति * । एकादश्युपोषणमन्यतिथ्युपोषणवत्केव
लैकफलदायकं नास्ति किन्तु सकलफलसर्वस्वभूतं सर्वपापनाश-सर्वपुण्य
वर्धन-गोविन्दस्मृतिदत्वेतिफलत्रयदायकमित्यर्थः । आदिपदबोध्यतीर्थसे
नादौ प्रमाणमाह-* वैष्णवेष्वथेति * । *द्वारकेति* । 'वैष्णवक्षेत्रेषु' इत्य
पदस्य विवरणमेतदथवा द्वारकामथुरातिरिक्तवृन्दावनप्रभासविष्णुकाञ्चीव
श्याद्यादिवैष्णवतीर्थबोधकम् । अन्यतीर्थसेवनापेक्षया गङ्गासेवनस्य विलक्ष
फलदातृत्वमाह-* मरण इति * । अन्यतीर्थानि परमात्मसायुज्यमु
दायकानि परन्तु "सालोक्यसार्ष्टिसामीप्यसायुज्यमेकत्वमप्युत । दीय
न गृह्णन्ति विना मत्सेवनं जनाः" ॥ इत्यादिवचननिचयप्रामाण्याद्भ
सायुज्यं नेच्छन्ति किन्तु "आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरु
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः" ॥ इत्यादिप्रमाणात्परमा
स्मरणाद्यहेतुकीं भक्तिमिच्छन्ति । तद्दातृत्वं न सामान्यन्यतीर्थेषु किन्तु गङ्ग
नत एवेतीयानस्य वचनस्य भावः, अथवा मरणेऽजामिलवत्स्मरणं भव
यथाश्रुतमेव । * सद्धर्मपृच्छेति * । आचरणीयपरमात्मप्रापकैका
दिज्ञानार्थं कः सद्धर्म एकादश्यादिरन्यो वेति पृच्छा । *भोगत्यागो
व्रताङ्गं व्रतसंरक्षणार्थं "असकृज्जलपानाच्च सकृत्ताम्बूलभक्षणात् । "उ
प्रणश्येत दिवास्वापाच्च मैथुनात्" ॥ इत्यादिना प्रतिपादितम् ।

मावर्तनीयं न वेति सन्देहे-नावर्तनीयम्। कुतः क्रतुवद्बहिरङ्ग-त्वात्। क्रतुरित्युपलक्षणम् . विहितकर्मसामान्यस्य। यथा विहितं यज्ञादिकर्म नाजन्मानुवर्तनीयं तथा क्रियायोगे परिगणितं व्रतादिकमपि।

"तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" ॥ (भाग० ११-२०-९)

इत्यादिना ज्ञानभक्त्युभयोत्पत्तिपर्यन्तमेव कर्मणोऽनुष्ठेयत्वे-

---

* बहिरङ्गत्वादिति * । कार्यकरणेऽस्यावश्यकत्वरूपाभावादित्यर्थः। * विहितकर्मसामान्यस्येति * । अत्र कर्मपदेन वेदादिविहितकाम्यकर्म-सामान्यं विवक्षितं न नित्यकर्म सन्ध्याग्निहोत्रपञ्चमहायज्ञादिकम् । तस्य "अहरहः सन्ध्यामुपासीत" "यावज्जीवमग्निहोत्रं जुहोति" "एतान् पञ्च-महायज्ञानहरहः कुर्वीत" इत्यादिश्रुत्यादिवचनैर्याजन्मकरणतया श्रुतत्वात्। अथवा कर्मपदेन वेदविहितनित्यसन्यासिकर्मन्यतिरिक्तस्य ग्रहणम् । अग्निहोत्रादीनि हि कर्माणि यावत्सन्यासमनुष्ठीयन्ते, न तु यावज्जन्मातो न दोषलेशः । * क्रियायोग इति * । "योगास्त्रया मया प्रोक्ता नृणां श्रेयो विधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्" ॥ इत्यादिवचनश्रुतकर्मयोग इत्यर्थः । * व्रतादिकमिति * । व्रतादिकस्यापि वेदमूलकस्मृत्युक्तत्वेनावश्यमनुष्ठेयत्वेन कर्मयोगे परिगणनं सुयोग्यमिति भावः । * ज्ञानभक्तीति * । अत्र श्रीमद्भागवतीयवचनेऽद्रुतचित्तस्य निर्वेदपूर्वकं तत्वज्ञानं द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धा-पूर्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम् । यद्यप्यत्र वचने यावद्विरक्ति कर्मानुष्ठानं प्रतीयते, तथापि यावद्विरक्तिपूर्वकतत्वज्ञानं विवक्षितमिति-

नोक्तत्वादिति प्राप्ते ब्रूमः । यथा योगे सम्पन्नेऽपि यमनियमासन-प्राणायामप्रत्याहाराः पञ्च बहिरङ्गभूता अपि योगनिर्वाहकतया योगिभिरावर्त्यन्ते तथैकादश्यादिव्रतादिकमपि चरमभक्त्यप्रतिबन्धाय भक्तैरनुवर्तनीयम् । मरणकालिकस्मृतिं प्रति तादृशव्रततीर्थादीनामुक्तवाक्यैर्हेतुतालाभात् । यत्तु लिङ्गधारणं पाद्मे—

"ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः ।
ते वैष्णवा भुवनमाशु पवित्रयन्ति" ॥

इत्यादि वैष्णवानां तथा शूलादिधारणं शैवानाम् ।

---

भावः । सिद्धान्तमाह—* यथा योग इति * । * बहिरङ्ग इति * । धारणाध्यानसमाधीनां त्रयाणां योगाङ्गानामसंप्रज्ञातसमाधेः पूर्वस्वरूपभूतत्वेनान्तरङ्गत्वमितिभावः । * योगनिर्वाहकतयेति * । यमादेर्बहिरङ्गत्वेऽप्यसंप्रज्ञातसमाध्यप्रतिबन्धायावश्यमनुष्ठेयत्वमित्यर्थः । * चरमभक्तीति * । परभक्तीत्यर्थः । * मरणेति * । यतो मरणकाले कफादिभिराक्रान्ते कण्ठादौ स्थाने बुद्धेरप्याक्रान्तत्वेन स्मरणासम्भवः । तथा च परभक्तेरसंभवः । परन्त्वेकादशीव्रतादिभिर्गङ्गासेवनादिकर्मभिश्च तस्मिन्समयेऽपि सर्वदा हरिस्मरणस्य स्थितिः परभक्तिसंभवश्चेति भावः । अथ तप्तमुद्राधारणं-मृदादिभिः शङ्खचक्राद्यङ्कनाचारः पुराणादिविहितो निषिद्धश्चैकादश्यादिव्रतवदनुष्ठेयो न वेति संशये न कर्तव्य इति सिद्धान्तयितुमाह—* यत्तु लिङ्गधारणमिति * । * तुलसीति * । तुलसीपत्रकाष्ठमाला कमलबीजमालेत्यर्थः । * ते वैष्णवा इति * । अनेन तुलस्यादिमालाधारित्वे सति बाहुमूलपरिचिह्नितशङ्खादिमत्त्वं वैष्णवलक्षणं सूचितम् । तथैतद्धारणफलं कथयति—* भुवनमिति * । * शूलादीति * । त्रिशूलादिचिह्नधारणं शैवानां कृत उक्तमित्यर्थः ।

तन्न वेदाधिकारिणां किन्तु तप्तशङ्खादिधारणं शूद्राणाम् । तप्तधारणा कुण्डगोलादीनां च । विष्णुस्मृतौ—

"शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥
यथा श्मशानजं काष्ठं सर्वकर्मसु गर्हितम् ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥
शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः" ॥

इत्यादिना तप्तधारणस्य शूद्रपरत्वावगमात् । तथा कौर्मे—

---

सिद्धान्तमाह—* वेदाधिकारिणामिति * । वेदाद्युक्तकर्माधिकारिणामित्यर्थः । * तप्तधारणेति * । शङ्खादीनामिति शेषः । * कुण्डेति * । "अमृते जारजः कुण्डो मृते भर्तरि गोलकः" इत्यादिलक्षणलक्षितानाम् । * गीतेति * । स्वेनाचरितमिति शेषः । * एकजातेरिति * । उपनयनसंस्काराधिकारशून्यस्य कुण्डगोलकशूद्रादेरित्यर्थः । ब्राह्मणानामुपनयनसंस्कारेणैव द्विजत्वं "जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते" इतिस्मृतेः । नन्वस्य शङ्खचक्रेतिवचनस्य वैदिककर्म परित्यज्य शङ्खचक्राद्यङ्कनपरब्राह्मणस्य कृतेप्रवृत्तिर्न तु वैदिककर्म कृत्वा शङ्खचक्राद्यङ्कनपरस्येत्यतः शङ्खचक्राङ्कितब्राह्मणस्य सर्वकर्मण्यनर्हत्वबोधकं स्मृतिवचनं प्रदर्शयति-* यथा श्मशानजमिति * । * सर्वकर्मस्विति * । यज्ञादिकर्मणि पाकादिकरणे चेत्यर्थः । * सर्वकर्मेति * । अग्निहोत्रादिषु पादसंवाहनादिसेवादिकर्मसु चेत्यर्थः । पतितत्वेन शूद्रवत्कर्मकरणेऽप्यधिकाराभाव इत्यर्थः । नन्वङ्कनमनेकप्रकारेण संभवति । तथाहि गोपीचन्दनरूपमृत्तिकया तप्तायसेन केवलसामान्यमृत्तिकया च । तत्रायं निषेधो न तप्तायसाङ्कनस्य किन्तु मृत्तिकयाङ्कनस्य चेत्यतः स्मृतिं प्रदर्शयति-* शङ्खचक्रमिति * । एवञ्चायं निषेधः सर्वप्रकारेण शङ्खचक्राद्यङ्कनपरस्येतिभावः । यथा तस्य द्विजकर्मकरणेऽधिकाराभावस्तथा तत्समीपे द्विजानामपि कर्मकरणेऽधिकाराभाव इतिबोधनार्थमुक्तं "बहिष्कार्य" इतीतिभावः । ननु तथाप्येतेषां वचनानां किं बीजं कुतो वा प्राथमिकी प्रवृत्तिरितिजिज्ञासाशान्तये कूर्मपुराणोक्तमितिहासमाह—

"सात्वतो नाम परमो विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिश्चितम् ॥
तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम्" ॥

तथाऽन्यत्र—

"पाञ्चरात्रे च कापाले पाशुडेष्वखिलेष्वपि ।
दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मिणः" ॥

तथा साम्बपुराणे—

"पाञ्चरात्रं सात्वतं यत्तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान्" ॥

इत्यादिना पाञ्चरात्राद्युक्ततप्तमुद्रादिधारणस्य कुण्डगोलादिपरत्वावधारणात् । ननु न केवलपाञ्चरात्राद्यागम एव तप्तमुद्रा धार्येत्युच्यते, किंतु श्रुतावपि । तथाहि श्रुतिः—

---

*सात्वतो नामेति* । *चितमिति* । आचरितमित्यर्थः । कुण्डादिकर्तव्यतप्तमुद्राबोधकसात्वतशास्त्रप्रदर्शनप्रसङ्गेनान्यतत्सदृशशास्त्रघटककवाक्यं प्रदर्शयति— * पाञ्चरात्र इति * । एतन्नारदादिप्रवर्तितम् । * कापाल इति * । कापालिकप्रणीतम् । * वैखानसमिति * । यावज्जन्म ब्रह्मचर्यधारणं कर्तव्यमित्यादिबोधकम् । पुराणनिषेधस्य पौराणिकादिकर्मपरत्वं न तु वेदोक्ततप्तशङ्खाद्यङ्कनपरत्वमित्यभिप्रायेण शङ्कते-*नन्विति* ।

"पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।
अतप्ततनूर्न तदामो अश्नुते शृता स इद्वहन्तस्तत्समाशत"
( तै० आ० १-११ ) इति ॥

अयमर्थः। ब्रह्मणस्पते-चतुर्मुखस्यापि, नायकः प्रभुस्त्वं, विश्वतः-सर्वेषां, गात्राणि-शरीराणि, पर्येषि-व्याप्नोषि, ते—व्यापकस्य तव, विततं पवित्रं—चक्रं सुदर्शनं सहस्रारं, "पवित्रं चरणं पविः" इति नैघण्टुकः। अत्र यदस्तीत्यध्याहार्यं तेन अतप्त तनूरत एवामः--अपक्वः अदग्धपाप इति यावत्। तत्-प्रसिद्धं मोक्षलक्षणं सुखविशेषं नाश्नुते, तत्-पवित्रं सदा वहन्तोऽत एव शृतासः—परिपक्वाः तत्सुखमाशते—अश्नुवन्तः इत्यर्थः। अतः श्रौतत्वात्सर्वेषां तप्तमुद्राधारणमावश्यकमितिचेन्न। कर्मणि विनियुक्तानामेतेषां मन्त्राणां विधिविभक्तिरहितानां चक्रादिधारणपरत्वे मानाभावात्। नचात्र विधिरुन्नेयः, "न धार्यं देवताचिन्हम्" इत्यादिनिषेधात्।

ननु "अग्निषोमीयं पशुमालमेत" इतिविधिना भूतहिंसानिषेधक-सामान्यवचनस्येव "न धार्यम्" इतिसामान्यनिषेधस्य चक्रादि-लेङ्गधारणविधिना संकोच एवेति वाच्यम्। पुराणेषु—

---

*श्रौतत्वात्सर्वेषामिति*। पुराणादिवचनेनु कुण्डादीनामयं धर्म इति यद्यप्यु-लभ्यते तथापि पुराणादिभिः श्रुतेः सङ्कोचाभावेन श्रुत्युक्तकर्मणि सर्वेषामेवाधिकार भावः। *कर्मणीति*। कर्मणि विनियुक्तस्यान्यत्कर्म विधातुं सामर्थ्याभावेन । तप्तमुद्राङ्कनविधानपरा एते मन्त्रा इत्यभिप्रायः। ननु यथा भक्ति-बोधकत्वं "यस्य श्री पूर्णा" इत्यादिमन्त्राणां कर्मविनियुक्तानामपि विधि रिक्तस्य कल्पितं तथात्रापि कल्प्यतामित्यादिशङ्कामनुवदिति-*नचेति*। *न धार्यमिति*। तत्र स्मार्तविरोधाभावेन तथा-कल्पनेऽप्यत्र विरोधसत्वेन न तथा कल्पनमिति भावः। ननु सामान्य-निषेधो न विशेषविधेयमवतरति, किन्तु, निषेध्ये तदतिरिक्तत्वेन सङ्कोचः क्रियते, यथा "मा हिंस्यात्सर्वा भूतानि" इति सामान्यहिंसानिषेधः "अग्निषोमीयं पशुमालमेत" इति विशेषाग्निषोमीयहिंसायां नावतरति, किन्तु तत्राग्नि-षोमीयादिहिंसातिरिक्तहिंसा न कर्तव्येति यथा संकोचस्तत्र स्वीकृतस्तथात्रापि तप्तचक्रचिह्नातिरिक्तं चिह्नं ब्राह्मणादिभिर्न धार्यमित्यभिप्रायेणाह-*नन्विति*। पक्षान्तमाह-*पुराणेष्विति*। अग्नीषोमीयादिदृष्टान्ते हिंसायाः सामान्यतो निषेधो विधानं विशेषहिंसाया, अत उभयोः सावकाशत्वाय

अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः ।
अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः ॥
तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा ।
भूदेवस्तप्तमुद्रादि चिह्नं कृत्वा विमूढधीः ।
इह जन्मन्यशुद्धः स्यात्प्रेत्य श्वा च भविष्यति ॥

इत्यादिना विशेषतोऽपि निषेधात् । न च पौराणनिषेधेन कथं श्रौतस्य धारणस्य बाधः स्यात् । "विरोधे त्वनपेक्ष्यम्" इतिमीमांसासूत्रोक्तविरोधाधिकरणविरोधादिति वाच्यम् । श्रुतेरन्यपरत्वस्योक्तत्वात् । अस्तु वा श्रुतिस्तत्परा, तथापि स्मृतिपुराणवाक्यानुसारेण कुण्डगोलादिरेव तत्राधिकारी । दृष्यते हि श्रौतास्याप्यश्वमेधादेः स्मृतिपुराणादिगतेन कलिनिषिद्धपरिगणितादिना

---

तत्र तया कल्पनेऽप्यत्र सामान्यतो विशेषतश्च निषेधेन तया तप्तमुद्राकर्माधिकारिकथनेन चाग्निषोमीयदृष्टान्ततः सर्वदा भिन्नत्वमेवात्रेत्यभिप्रायः ।

* विरोधे त्वनपेक्ष्यमितीति * । सम्पूर्णसूत्रं च "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" इति । अत्र हि "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इतिश्रुतिविरुद्धा "औदुम्बरी सर्वा वेष्टयितव्या" इतिस्मृतिः प्रमाणं नवेति विचारे पक्षे स्मृतिः श्रुतिबाधिका संकोचिका वेति पूर्वपक्षे सिद्धान्तबोधकमेतत्सूत्रम् । उपलभ्यमानश्रुतिविरोधे स्मृतिप्रामाण्यमनपेक्ष्यमनादरणीयं कल्प्यश्रुत्यपेक्षया प्रत्यक्षश्रुतेः प्रबलत्वेन बाधाद्यसंभवादितिभावः । विरोधेऽसति श्रुतिकल्पकमनुमानं प्रवर्तत इति निर्णीतम् । । अत्र 'पवित्रं' 'विततं' इत्यादिपदैश्चक्रादिकं स्वीक्रियते, परन्तु वेदभाष्ये तेषां पदानां तत्पदबोध्यप्रसिद्धमोक्षलक्षणसुखस्य विशेषणपरत्वेनाप्यङ्गीकारात् । नन्वेनकमुखत्वाच्छ्रुतीनां येऽर्थाः प्रतिभासन्ते ते सर्वेऽप्यङ्गीकरणीया एवेत्यत आह–* अस्तु वेति * ।

ननु श्रुत्युक्ते कर्मणि सामान्यतः सिद्धाधिकारिणः सङ्कोचः कथं कर्तुं शक्य इत्यत आह–* तथापीति * । अत्रानुकूलं दृष्टान्तमाह–* अश्वमेधादेरिति * । * पुराणादिगतेनेति * । "कलावाद्यन्तयोः स्थितिः"

संकोचः। अन्यथा कलावप्यश्वमेधादिकं स्यात्। स्याच्च पतितस्यापि तत्। तस्माच्च तद्वैदिकानामितिसिद्धम्। एतेन न विशेषनिषेधवाक्यं रागप्राप्तनिषेधाभिप्रायमितिनिरस्तम्। तत्प्रधारणस्य दुःखरूपत्वेन रागप्रापितत्वात्। न च तत्र प्राप्तस्य निषेधायोगात्प्रापकस्य शास्त्रस्योपजीव्यत्वेन प्रबलत्वात्तेनैव वाक्येन निषेधस्य बाधः स्यादितिशङ्क्यम्। "यजतिषु ये यजामहं करोति

---

इत्यादिवचनैः शुद्रक्षत्रियादिकानामभावबोधनेन शुद्रक्षत्रियकर्तृकस्याश्वमेधस्य कलावभाव एव। * अन्यथेति *। पुराणादिवचनैर्वैदिकवचनसंकोचास्वीकारे। * पतितस्येति *। पतितक्षत्रियस्येत्यर्थः, क्षत्रियंमन्यस्येतियावत्। * तदिति *। अश्वमेधादिकरणमित्यर्थः।

* रागप्राप्तेति *। रागप्राप्तकर्तव्यनिषेधाभिप्रायमित्यर्थः। ननु यत्र रागतः प्राप्तिर्नास्ति किन्तु विधित एव, तत्र निषेधस्य स्वसाफल्याय विधेयशास्त्रस्यापेक्षायाः सत्वेनोपजीव्यतया विधिशास्त्रस्य सर्वथा निषेधेन बाधायोगात्। एवं च यथा निषेधकत्वेन निषेधशास्त्रं प्रबलं तथा विधिशास्त्रमपि निषेधशास्त्रोपजीव्यतया तस्मादपि प्रबलमेवेत्र विधिशास्त्रेणैव निषेधस्य बाधः करणीय इत्यभिप्रायेणाह—* नचेति *।

* यजतिष्विति *। अत्रायमभिप्रायः। तैत्तिरीयसंहितायां "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं येयजामह इतिपञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः" इत्युद्दिश्य "यजतिषु येयजामहं करोति नानूयाजेषु" इत्युक्तम्। तस्यायमर्थः। यजिधातुघटितपदघटितविधिवाक्यविहितकर्मसु सर्वत्र "आश्रावय" इत्यादीनि सप्तदशाक्षराणि पठनीयानि, परन्तु यजतिविशेषानूयाजेषु येयजामहोपलक्षितसप्तदशाक्षराणि न पठनीयानीति। अत्र च निषेधस्य यथाविशेषविषयत्वेन प्राबल्यं तथा विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेस्त्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्प

नानूयाजेषु" (तै०सं०१-६) इत्यादौ सामान्याद्विशेषस्य प्रबलतयाऽत्रापि प्रापकसामान्यविधितो विशेषनिषेधस्यैव प्रबलत्वात् सामान्यस्यैव बाधनादित्यास्तां विस्तरः । (४-६)

---

आश्रयणीय इति प्राप्तं परन्तु तन्न योग्यम् । अष्टदोषदुष्टत्वाद्विकल्पस्य । किन्तु नञोऽनूयाजशब्देन सम्बन्धमाश्रित्य पर्युदास आश्रीयते । नञनूयाजशब्दाभ्यामनूयाजव्यतिरिक्तयजतिनामकीकृत्वानूयाजव्यतिरिक्तेषु येयजामहं करोतीत्यर्थः स्वीकरणीय इत्यादि प्रतिपादितं जैमिनिना "प्रतिषेधः प्रदेशेऽनारम्भविधाने प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात्" इत्यादिना पूर्वपक्षं कृत्वा "अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्" इत्यादिना पूर्वोक्तं सिद्धान्तितमिति ।

* सामान्याद्विशेषस्येति * । अयमभिप्रायः । सामान्यविधिशास्त्रस्योपजीव्यतया प्रबलत्वेऽपि निषेधशास्त्रस्य विशेषनिषेधकत्वेन ततोऽपि प्राबल्यस्योचितत्वम् । अन्यथा विधिशास्त्रेण निषेधस्य बाधे निषेधस्य सर्वथा व्यर्थत्वमेव स्यात् । सामान्यविधिशास्त्रविधेये निषेधनिषेध्यातिरिक्तत्वेन संकोचे तु निषेध्यभिन्ने सामान्यविधेर्निषेध्ये निषेधस्य च चारितार्थ्येन नोभयोरपि व्यर्थत्वमिति । * सामान्यस्यैव बाधनादिति * । निषेधनिषेध्यातिरिक्तत्वेन संकोचादित्यर्थः ।

सूत्रार्थस्तु—तदङ्गानां—ज्ञानाङ्गानां "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इत्यादिश्रुतिबोधितशमादीनाम् । पूर्वसूत्रात्समासघटकस्यापि 'प्रवृत्ति'पदस्यानुवृत्तिः करणीया । तथा च असकृदावृत्तिः करणीयेति फलति । वस्तुकान्तररीत्यार्थस्तु तदङ्गानां—ज्ञानाङ्गभूतानां "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" ॥ इत्यादिनोक्तानाम्, असकृदावृत्तिः करणीयेति । ज्ञानं भक्तेरङ्गमित्युक्तं तत्र "सा परानुरक्तिरीश्वरे" इतिसूत्रस्वादीश्वरविषयकं ज्ञानं भक्तेरङ्गं भवतीति ज्ञातेऽपीश्वरविषयकं ज्ञानं त्रिविधं संभवति. "द्वा सुपर्णा" इत्यादिश्रुत्या ईश्वरो जीवात्सर्वथा भिन्न एव जीवेन स्वोन्नत्यै सर्वदा तस्य भजनं कर्तव्यमिति,

## तामैश्वर्यपदां काश्यपः परत्वात् । २ । १ । ३
## ( आत्मैकपदां बादरायणः । २ । १ । ४ )
## (उभयपदां शाण्डिल्यः शब्दोपपत्तिभ्याम् । २ ।१ । ५)

अन्यसाधनसाध्या धीर्भेदं वाऽभेदमाश्रिता ।
उत्कृष्टधीर्यतो भेदघटितार्थाश्रिता भिदाम् ॥ ७ ॥
सेव्यसेवकभावे हि भेदबुद्धिरपेक्षिता ।
आह स्म काश्यपो भेदविषयां भक्तिसाधनम् ॥ ८ ॥
व्यासोऽनन्तत्वरूपस्योत्कर्षस्याभेदतः स्थितेः ।
अभेदविषयां प्राह बुद्धिं भक्तेस्तु साधनम् ॥ ९ ॥
भिन्नसत्ताकयोर्भेदाभेदबुद्ध्योर्व्यवस्थितिः ।
अधिकारिभिदेत्याह शाण्डिल्यः सत्फलग्रहः ॥ १० ॥

तृतीयाधिकरणमारचयति—*अन्यसाधनेति* । तत्र शास्त्रप्रतिपाद्यं ब्रह्म स्वभिन्नतया स्वाभिन्नतया वा ज्ञातव्यमिति संदेहे दुःख्यदुखिनोर्जीवब्रह्मणोरेकत्वविरोधात् भेदघटितोत्कर्षधीसाध्याया भक्तेर्भेदं विनानुपपत्तेश्च स्वभिन्नतयैव ब्रह्म ज्ञातव्यमिति काश्यपः । तन्न, ब्रह्मस्वरूपस्यैव सतो निर्दुःखस्य

"सत्यं ज्ञानमनन्तं ब्रह्म" "तत्वमसि" "अहं ब्रह्मास्मि" "आत्मेति त्ववगच्छन्ति ग्राहयन्ति च" इत्यादिश्रुतिसूत्रैः परमात्मैवाहमित्यभेदबुद्धिः कर्तव्येति, तथा भेदविषयाऽभेदविषयोभयप्रकारापि बुद्धिः कर्तव्येति विचिकित्सायां स्वीयं परमेश्वरभेदाभेदविषयकं मतं प्रदर्शयितुं तृतीयाधिकरणमारचयति-* अन्यसाधनेतीति * । * स्वभिन्नेति * । परमात्मा सर्वथा मद्भिन्नोऽहं तस्य दास एव केवल इतिरीत्येत्यर्थः । * अभिन्नतयेति * । "अहं ब्रह्म" इतिश्रुत्या जीवात्मा वस्तुतः सर्वदा ब्रह्मरूप एवाज्ञानेन भिन्न इति भासत इत्यादिरीत्येत्यर्थः । * भेदघटितेत्यादि * । अहमीश्वराद्भिन्नो दुःखित्वादीश्वरस्यादुःखित्वाच्च, ईश्वरो मदपेक्षया परमैश्वर्यादिमत्वेनातीवोत्कृष्टो भिन्नश्चेत्याकारकभेदघटितोत्कर्षविषयकबुद्धिरेव परानुरक्तिरूपभक्तेः साधिकेत्यर्थः । *भेदं विनेति* । भेदज्ञानमुत्कर्षापकर्षज्ञानजनकम्, स्वापेक्षयोत्कृष्टत्वज्ञानं च श्रद्धोत्पादकम्, स्वाराध्यस्य विलक्षणानन्दादिजनकत्वज्ञानं च परप्रेमरूपभक्तिजन-